THE

# NÎTI AND VAIRÂGYA S'ATAKAS.

OF

# BHARTRHARI.

*Edited with Notes, a Com in Sans and an English Translation,*

BY

**M. R. KALE, B. A.**

FOURTH REVISED EDITION

Published by

**Gopal Narayen & Co.**

**BOMBAY.**

some think, but
that the poet



Price Rs. 1½.

instruction. The Slokas in both the S'atakas are embellished with figures of speech which are natural and of the simpler sort. To impress a principle on the mind of the reader, Bhartṛhari generally puts forth a wealth of illustration, often drawn from nature, which is but seldom equalled, and his delineation of character is so varied, and so striking and his observation of natural phenomena so close that we must believe that he was a minute observer of the world. This minute observation, it may be presumed, has enabled him to discharge his self-imposed task of a didactic poet with so much success, as is attested by the high popularity which he enjoys, and the unique position which he holds in the history of Sanskrt literature.

## PREFACE

### TO

## THE SECOND EDITION. (1902)

In the preparation of this Second Edition of the Nīti and Vairagya S'atakas sufficient care has been taken to revise the Notes and Translation as critically and minutely as was possible. Much valuable help was derived from Mr. K. M. Joglekar's Edition of the *Satakas* for which I feel greatly thankful to him.

Third Edition—1910 M. R. Ka'le.

## FOURTH EDITION

In revising the text of the S'atakas for this edition I had the advantage of consulting two more Mss and the Nir. Ed. with the com. of R'amachandrabudhendra. By the light of these the slokas in the two S'atakas have been rearranged under different heads. Such an arrangement of the slokas might have been the work of later editors or writers as some think, but it has at least this advantage—*viz.* all that the poet wishes to say on a particular theme is brought together instead of being scattered pell mell here and there and can thus be better understood. The Sans. com has been amplified some useful matter being added. The *notes and translation also have been carefully revised.*

*25th, July 1913.* M. R. K.

# CONTENTS.

The S'atakas treat of the following themes:—

## NITI S'ATAKA.



## VAIRA'GYAS'ATAKA.

॥ श्रीः ॥

अथ श्रीमद्भर्तृहरिविरचित

# नीतिशतकम् ।

---

येनादिरप्यनुजिघृक्षुरपत्यहेतो-
स्तीव्रं तपो विदधता मुनिमत्रिमर्त्तम् ॥
त्रेधा विभज्य निजरूपमगात्स्वयं स
भूयात्सदा स भगवान्भजकार्तिहारी ॥
कृतं यद्भर्तृहरिणा सुभाषितशतत्रयम् ।
टीकां बालहितां तस्य विदधामि यथामति ॥
दत्तात्रेयं नमस्कृत्य परं कारुणिकं गुरुम् ।
तत्प्रसादबलादत्र प्रवृत्तोऽहं न धीगुणात् ॥

अथ तत्रभवान्नृपश्रेष्ठ श्रीभर्तृहरि कविः सदाचारस्य नीतिज्ञानपूर्वकत्वान्नीतिशतकं विषयोपभोगस्य परिणामविरसत्वाद्वैराग्यं प्रति हेतुतया शृंगारशतकमुत्पन्नाया वैराग्यबुद्धेर्दृढीकरणाय वैराग्यशतकं च अज्ञानोपहतान्समजिघृक्षया विरचयिषुरादौ नीतिशतकमारभमाणो मङ्गलादीनि...हि शास्त्राणि प्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषकाणि च भवन्ति अध्येतारश्च प्रवक्तारो भवन्ति परिसमापिकामो मङ्गलमाचरेदित्यादिवचनानुरोधात् प्रारिप्सिताविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदादिफलकामो ब्रह्मरूपेष्टदेवतानमस्कारात्मकं मङ्गलमुपनिबध्नाति ॥

**दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये ।**
**स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥ १ ॥**

दिगिति—दिग्दिशा। कालो भूतभविष्यद्वर्तमानलक्षणः। दिक्च कालश्च दिक्कालौ तावादी येषां ते दिक्कालादयः। आदिशब्देन गुणादयो ग्राह्याः। दिक्कालादिभिरनवच्छिन्नमपरिमितम्। न विद्यते अन्तो यस्य तदनन्तम्। चिदेव

---

दिक्कालाद्यनवच्छिन्नाय चिन्मात्रानन्तमूर्तये १ भूत्यै १ सा॰रा॰ १० पा॰.

चिन्मात्रं मूर्तिर्यस्य तच्चिन्मात्रमूर्ति केवलं ज्ञानस्वरूपम् । दिक्कालाद्यनवच्छिन्नं च तदनन्तं च चिन्मात्रमूर्ति च तस्मै । तथा च श्रुतिः—सत्यं ज्ञानमनन्तं ब्रह्म इति । स्वस्यानुभूतिः स्वानुभूतिरेव एकं मुख्यं मानं ब्रह्मणः परिनिष्ठितस्वतत्त्वदवगमे प्रमाणं यस्य तस्मै । एकं मुख्यान्यकेवलाः । इत्यमरः । शान्ताय । निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनमिति श्रुतेः । तेजसे परस्मै ज्योतिषे ब्रह्मणे नमः । तद्देवा ज्योतिषां ज्योतिः (उपासते) इति श्रुतेः । नमःस्वस्तीत्यादिना चतुर्थी । उक्तं च पञ्चदश्याम्—देशकालान्यवस्तूनां कल्पितत्वाच्च मायया । न देशादिकृतोऽन्तोऽस्ति ब्रह्मानन्त्यं स्फुटं ततः ॥ इति ॥

अखिलजगतीन्द्रियाणां चपलप्रकृतिकत्वाददृष्टादिदोषाद्वा न कदाचित् कस्यांचित्कस्याश्चिद्वा क्वचित्प्रीतिः स्थिरता । नरेण तथा वर्तितव्यं यथा मदनवशगो न भवेदिति दर्शयन्नाह—

यां चिन्तयामि सततं मयि सा विरक्ता
साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः ।
अस्मत्कृते च परिशुष्यति काचिदन्या
धिक्तां च तं च मदनं च इमां च मां च ॥ २ ॥

कस्यापि निर्विण्णस्य विपर्ययेण उक्तिरियम् । यां सततं सर्वकालं मम प्राणप्रियेति चिन्तयामि सा वस्तुतः मयि विरक्ता विगतानुरागा । अन्यं जनमुपपतिम् । अन्यस्यां सक्तः अन्यसक्तः । स्वनाम्नी श्रुतिमात्रे पुंवद्भाव इति पूर्वपदस्य पुंवद्भावः । परिशुष्यति उन्म्यति । परितुष्यतीति पाठे मामुद्दिश्य संतोषमेतीत्यर्थः । अतः तां मत्प्रियां धिक् । धिक्शब्दयोगे द्वितीया । तस्याः अभीष्टं जनं च धिक् । सर्वमिदं मदनकृतमिति तमपि धिक् । इमां पुंश्चलीं च धिक् । अहमपि बहिरङ्गकारणीयतया श्रित्वैवं वञ्चित इति मामपि धिक् । स्पष्टमन्यत् । च इमामित्यत्र—संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ इति न सन्धिः कृतः । आलंकारिकाणां मते त्वत्र विसन्धिदोषः । वसन्ततिलका वृत्तम् । अत्रेयं किंवदन्ती श्रूयते—केनापि योगिना । ब्राह्मणेनेति क्वचित् । जरामृत्युराहित्यप्रापकं फलं भर्तृहरये दत्तम् । राजा तदात्मप्रियायै दत्तवान् । सा चान्यमनस्का तदात्मनो जाराय दत्तवती ।

१ रक्त. २ परितुष्यति इ० पा०.

तेनापि तत्कस्यैचित्स्वप्रणयिन्यै दत्तम् । तयापि सर्वेषां पालको नृप एव जरामरणादिरहितमर्हतीति कृत्वा तन्मुखेन राज्ञे दत्तम् । तद्दृष्ट्वा परमं वैराग्यमापन्नो भर्तृहरिर्वनं जिगमिषुरिदं शतकत्रयं रचयामासेति । एवं सत्यप्येतस्मिञ्शतके* नार्हति स्थानमेतत्पद्यम् । नीतिशास्त्रविन्कविः स्वयमेव स्वगृहच्छिद्रमेव स्फुटीकुर्यादित्यपि न सम्भवतीत्यलं प्रासङ्गिकेन ॥

अधुना व्यवहारस्वरूपवैविध्यपरिज्ञानार्थं विषयं दर्शयित्वा विभज्यादौ जनारञ्जनं(?)ति वर्णयितुमारभते—

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥ ३ ॥

जानातीति ज्ञः । न ज्ञः अज्ञः । अज्ञानोऽज्ञातशङ्कः विवेकविकलो वा शिष्टोक्तं शृणोत्याचरति च अतः । सुखमनायासेन, आराध्यः समाधातुं शक्यः । विशेषं जानातीति विशेषज्ञः । आतोऽनुपसर्गे कः इति कप्रत्ययः । सुखतरं युक्तायुक्तस्य तत्कालज्ञानादत्यन्तमनायासेन आराध्यते । किन्त्वज्ञो विलक्षणं ज्ञानस्य लवेन दुर्विदग्धो दुष्टचतुरस्तं ज्ञानलेशमात्रेणात्मानं पण्डितमानिनम् । ब्रह्मा सर्वशक्तिमानपि । वा कथं तयोपार्मिति भावः । न रञ्जयति रञ्जयितुं शक्नोति । युक्तिसहस्रेणापि तन्मनःसमाधानस्य दुःसम्पाद्यत्वादिति भावः । अत्र रञ्जनसम्बन्धेऽप्यसम्बन्धाभिधानादतिशयोक्तिरलङ्कारः । वृत्तमार्याभेदः । तल्लक्षणम् । यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥ इति ॥

अथ प्रतिनिविष्टमूर्खचित्तस्य दुराराध्यतामेवाह द्वाभ्याम् —

प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्रान्तरा-
त्समुद्रमपि संतरेत्प्रचलदूर्मिमालाकुलम् ।
भुजङ्गमपि कोपितं शिरसि पुष्पवद्धारये-
न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ४ ॥

मकरो जलजन्तुविशेषः । तस्य वक्त्रं तस्य दंष्ट्रे तयोरन्तरात्मध्यात् । प्रसह्य हठान्मणिमुद्धरेत् । उद्धर्तुमशक्यमपीत्यर्थः । अग्रोत्तरासम्भवे च सर्वत्र शक्यार्थे विधिलिङ् । नर इति शेषः । ऊर्मीणां माला कुलं प्रचलन्त्यश्च ताऊर्मि

* न चेदमुपलभ्यते केषुचित्पुराणपुस्तकेषु । १ ब्रह्मापि तं नरम् २ दंष्ट्राङ्कुरात् ३ सन्तरेत्.

मालाश्च प्रचलदूर्मिमालास्ताभिः । प्रचलन्तश्च ते ऊर्मयश्च तेषां मालाभिरिति वा । आकुलस्तम् । दुस्तरमपीत्यर्थः । संतरेत् बाहुभ्यां वा प्लवसाधनेन वा । कोपितं कोपोऽस्य संजातः तं सञ्जातकोपम् । तारकादेराकृतिगणत्वादितच् । यद्वा कोपं प्रापितम् । पुष्पेण तुल्यं पुष्पवत्पुष्पस्रजमिव । तेन तुल्यं क्रियाचेद्वतिरिति वतिप्रत्ययः । किंतु प्रतिनिविष्टं सति असति वा वस्तुनि जाताभिनिवेशम् । दुराग्रहाविष्टमित्यर्थः । मूर्खजनस्य चित्तम् । प्रतिनिविष्टश्चासौ मूर्खजनश्च तस्य चित्तमिति वा । नाराधयेत् । सर्वथा साधनानां प्रतिहतत्वात् । अत्र मण्युद्धरणाद्यसम्बन्धेपि तत्सम्बन्धाभिधादतिशयोक्तिरलङ्कारः । पृथ्वी वृत्तम् ॥

अधुनाघटितघटनमपि सम्भवेन्न तु मूर्खचित्ताराधनमित्याह—

लभेत सिकतासु तैलमपि यत्नतः पीडयन्
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।
कदाचिदपि पर्यटञ्छशविषाणमासादये-
न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ५ ॥

यत्नतः प्रयासात् । पञ्चम्यास्तसिः । पीडयन्मर्दनयन्त्रादिना । सिकतासु वालुकासु । तैलं तिलस्य तत्सदृशस्य वा विकारः । विकारार्थे अण् । लभेत लब्धुं शक्नुयात् । कश्चिदिति शेषः । पातुमिच्छा पिपासा । पापाने इत्यस्माद्धातोः सन्नन्तात्स्त्रियामप्रत्यये टाप् । तया अर्दितः पीडितः । मृगाणां तृष्णाऽस्यां मृगतृष्णा । सा एव मृगतृष्णिका । अत्र स्वार्थे कप्रत्यये प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप इतीकारः । केवलं जलभ्रमदायिनीष्वपि । मृगतृष्णिकासु मरीचिकासु । सलिलं जलम् । कदाचिदनुकूलवेलायां पर्यटन् तत्र तत्र भूप्रदेशे चरन् । शशस्य शृङ्गमपि आसादयितुं लब्धुं शक्नुयात् । पूर्ववदतिशयोक्त्यलङ्कारः । वृत्तं पृथ्वी । अत्र प्रथमद्वितीयचतुर्थपादेषु सिकतासु तैलमित्यादौ अष्टमवर्णे इष्टस्य विच्छेदस्याभावाद् यतिभ्रष्टनामा दोषः । तदुक्तं विश्वनाथेन । यत्र स्थाने यतिभ्रंशस्तद्यतिभ्रष्टमुच्यते । अत्र केचित् सिकतानां तैलं सिकतासु तैलमेवं मृगतृष्णिकासु सलिलमित्येकं पदं वाञ्छन्ति । वृत्तं पृथ्वी ॥

अथाज्ञानोपहतानां खलानां मधुरवचनैरनुनयने प्रयत्नोऽत्यन्तं हास्यास्पदमेवेत्याह—

व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते
छेत्तुं वज्रमणीञ्छिरीषकुसुमप्रान्तेन सन्नह्यते ।
माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते
नेतुं वाञ्छति यः खलान्पथि सतां सूक्तैः सुधास्यन्दिभिः ॥६॥

असौ नरः व्यालं दुष्टगजम् । व्यालो दुष्टगजे सर्पे इति विश्वमेदिन्यौ । बालं च तन्मृणालं बिसं तस्य तन्तुभिः । रोद्धुं नियन्तुमुज्जृम्भते । कृतोत्साहो भवति । वज्रो हीरकः मणिः वज्रमणिस्तम् । तीक्ष्णलोहेनानालेख्यमपाल्यं । शिरीषकुसुमं सर्वेषु कुसुमेषु मृदिष्ठं तस्य प्रान्तेन । प्रकृष्टोऽन्तः प्रान्तस्तेन । छेत्तुं सन्नह्यते बद्धपरिकरो भवति । क्षारश्चासावम्बुधिश्च तस्य । मधुरातानि मधुरं मधुरस्य भावो माधुर्यं तत् । ईहते वाञ्छति । ‘ईह चेष्टायाम’—य । सुधां स्यन्दन्ते स्रवन्तीति अमृतस्राविभिः सूक्तैः प्रियभाषणैः । स्पष्टमन्यत् । मूले यः प्रतिनेतुमित्यादिपाठे प्रतिनेतुमनुनेतुमित्यर्थः । अलङ्कारो मालानिदर्शना । न चाय दृष्टान्तः । वाक्यभेदेन प्रतिबिम्बकरणाक्षेपे तस्योत्थानात् । अत्र तु वाक्यार्थे वाक्यार्थसमारोपाद्वाक्यस्यैकवाक्यतायां तदभाव इत्यलङ्कारसर्वस्वकारः । शार्दूलविक्रीडितं वृत्तम् ॥

स्वायत्तमेकान्तगुणं विधात्रा विनिर्मितं छादनमज्ञतायाः ।
विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ॥७॥

स्वस्यायत्तं स्वायत्तं स्वाधीनं न त्वन्यापेक्षम् । एकः एकान्तो यस्य स एकान्तः । एकान्तो गुणो यस्य तत् । एतादृग् अज्ञतायाः । छाद्यतेऽनेनेति छादनम् । करणाधिकरणयोश्च (पा ३ ३. ११७) इति करणे ल्युट् । विधात्रा निर्मितम् । किं तदित्यपेक्षायामाह—मौनमिति । कथंभूतं विशेषतः सर्वं विदन्तीति सर्वविदस्तेषां समाजे । अपण्डितानां भूषणम् । पण्डा सदसद्विवेकबुद्धिः । पण्डा एषां सञ्जाता इति पण्डिताः । तदस्य सञ्जातमिति तारकादिभ्य इतच् (पा ५ २ ३६) इति इतच्प्रत्ययः । न पण्डिता अपण्डितास्तेषाम् । अतः सर्वत्र विशेषतः पण्डितसभासु अर्हं मौनमाश्रित्य वर्तितव्यमिति भावः । उपजातिश्छन्दः ॥

---

१ भेत्तुम् २ मूले, मूलान्य प्रतिनेतुमिच्छति बलात्सूक्तैः; इ० पा० ३ वि

अथाल्पज्ञेन दृप्तेन न भाव्यं सति विशेषज्ञाने दर्पः स्वय एवापोह्यते इति दर्शयितुं कस्यचिदनुभवमाह ॥

यदा किंचिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किंचित्किंचिद्बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ ८ ॥

मदेन अन्धः मदान्धः । योग्यायोग्यविचारशून्य इत्यर्थः । यतस्तदा परमार्थतोऽल्पज्ञोऽपि सर्वज्ञोऽस्मीति कृतमतेः मम मनोऽवलिप्तं गर्वितमभवत् । बुधजनः पण्डितो भिषग्वरश्च । प्रतिदिनमभ्यास्तं ज्ञानं भेषजं च । तदहं वस्तुतो मूर्ख इति लब्धप्रतीते मम मदः व्यपगतः पुनरा निर्गतः । मदस्य ज्वरवत्सर्वाङ्गविकारकारित्वात्तत्साम्यम् । आचार्यवान्पुरुषो वेद इति शास्त्रात्ररीय-भाविष्युपलब्धं ज्ञानमेव विनयादिहेतु इति भावः । शिखरिणीवृत्तम् ॥

अथ स्वल्पलाभतुष्टस्य नीचस्य तृष्णाप्रकारमाह श्वदृष्टान्तेन—

कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं
निरुपमरसं[3] प्रीत्या खादन्नरास्थि निरामिषम् ।
सुरपतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते
न हि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ॥ ९ ॥

कृमीणां कुलैः समूहैः चितं व्याप्तम् । विगन्धि विस्रगन्धि । विशब्दस्य पूतिपर्यायत्वे 'गन्धस्येदुत्पूति...' (५. ४. १३५) इत्यादिना इकारान्तादेशः । यद्वा वि विरुद्धः गन्धो विगन्धः सोऽस्यास्तीति विगन्धि । जुगुप्सितं उद्वेगकरं निरामिषं निर्मांसं नरास्थि । लालया सृणिकया क्लिन्नमार्द्रम् । निरुपमो रसो यस्मिन्कर्मणि तद्यथा तथा । रसप्रीत्येति पाठे रसे प्रीतिः रसप्रीतिः । निर्गता उपमा दृष्टा सा निरुपमा । निरुपमा या रसप्रीतिः तया । खादन् पार्श्वस्थं निकटस्थमिन्द्रमपि विलोक्य न शङ्कते लज्जते । तत्कर्म न जहाति । परिग्रहस्य स्वीकृतवस्तुनः फल्गुतां तुच्छत्वं न गणयति मनसि करोतीत्यर्थः । अत्राप्रस्तुतश्ववृत्तकथनात्प्रस्तुतमूर्खजनवृत्तेः प्रतीत्या अप्रस्तुतप्रशंसालङ्कारः । अर्थान्तरन्यासश्चेत्युभयोः सङ्करः । हरिणीवृत्तम् ॥

---

१ गज. २ मन. ३ रसप्रीत्या. ४ खाद. ५ गणयति न हि क्षुद्रो श्वेव.

शिरः शार्वं स्वर्गात्पशुपतिशिरस्तः क्षितिधरं
महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् ।
अधोऽधो गङ्गेयं पदमुपगता स्तोकमथवा
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ १० ॥

इयं गङ्गा स्वर्गात् शर्वस्य शिवस्येदं शार्वं शिर उपगता । पशूनां जीवानां पतिः पशुपतिः ईश्वरस्तस्य शिरस्तस्मात् । क्षितिधरं हिमाचलम् । महीं धरतीति महीध्रः । मूलविभुजत्वादित्वात्कप्रत्ययः । उत्तुङ्गादुन्नतात् । एवमियं गङ्गा अधोऽधो गच्छन्ती स्तोकमल्पं नीचमित्यर्थः । पदमुपगता । अथवा विवेकभ्रष्टानां सदसद्विचारच्युतानाम् । शतमुखो बहुप्रकारः । पुरा किल भगीरथो नाम राजा पितुरश्वमेधीयाश्वान्वेषणक्रमेण पातालमुपगतान् अयमेवाश्वापहारीति कृतावस्कन्दनेन महर्षिणा कपिलेन हुङ्कारमात्रेण दग्धान् सगरसुतान् आत्मनः प्रपितामहान् सुरलोकाद्गङ्गाया अवतरणं कारयित्वा तस्या जलेनोदद्धारदिति कथात्रानुसन्धेया । अत्रैकस्या गङ्गाया अनेकस्मिन्नाधारेवास्थिते पर्यायास्योलङ्कारः । चतुर्थपादेऽर्थान्तरन्यासश्च । शिखरिणी वृत्तम् ॥

शक्यो वारयितुं जलेन हुतभुक्छत्रेण सूर्यातपो
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ ।
व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ ११ ॥

हुतं भुनक्तीति हुतभुगिति व्युत्पत्त्या वैदिकाग्निपरोऽप्ययं शब्दोऽत्र लौकिकाग्निपरः । निशितश्चासौ अङ्कुशश्च तेन । भेषजमौषधम् । मन्त्रदेणेति पाठे यथावद्ग्रहणेन । मन्त्राश्च प्रयोगाश्च तैः । तदुक्तम्--तच्छान्तिरौषधैर्दानैर्जपहोमसुरार्चनैः । शार्दूलविक्रीडितं वृत्तम् ॥

साहित्यसङ्गीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः ।
तृणं न खादन्नपि जीवमानस्तद्भागधेयं परमं पशूनाम् ॥ १२ ॥

साहित्यं च सङ्गीतं च कलाश्च ताभिर्विहीनः । गीतं वाद्यं नर्तनं च त्रिभिः सङ्गीतमुच्यते । यद्वा संगीतस्य कला संगीतकला । साहित्यं च संगीतकला च

१ पतति शिरस्स्तः०, पतति शिरसोऽतः० २ अधो-अधो-गङ्गा सेयं ३ समदो. .गोगर्दभः ४ भेषजसंग्रहणविधिना ५ ०विहितं

ताभ्यां विहीनः । विषाणं शृङ्गं । जीवमान. जीवतीति तच्छील. । ताच्छील्यवयो• वचनशक्तिषु चानश् । वृत्तमुपजाति । अलङ्कारो रूपकभेद ॥

**येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः ।**
**ते मर्त्यलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥ १३ ॥**

विदन्त्यनया इति विद्या मीमांसादि । तप कृच्छ्रादि कर्म च इत्यमर• । भारा भूता. भारभूता । मुप्सुपेति समासः । मर्त्यलोके चरन्ति । उपजातिश्छन्द• ॥

**वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह ।**
**न मूर्खजनसंपर्कः सुरेन्द्रभवनेष्वपि ॥ १४ ॥**

पर्वाण्यस्य सन्तीति पर्वत. । दु खेन गम्यतेऽत्र इति दुर्गम् । सुदुरोरधिकरणे इति उप्रत्यय• । भ्रान्तं भ्रमणम् । वनेचरन्तीति वनचरा तैः सह । अनुष्टुप् छंद• ।

अथ विद्वत्पद्धतिमारभते—

**शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयागमा**
**विख्याताः कवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः ।**
**तज्जाड्यं वसुधाधिपस्य कवयो ह्यर्थं विनापीश्वराः**
**कुत्स्याः स्युः कुपरीक्षका न मणयो यैरर्घतः पातिताः ॥१५॥**

शास्त्रेण व्याकरणादिना उपस्कृता अलङ्कृता. शब्दास्तै. सुन्दरा गिः वाणी येषां ते । शिष्येभ्य प्रदेया व्याख्यानरूपेण दातुं योग्या आगमा शास्त्राणि येषां ते । आगम शास्त्र आयतौ इति विश्वः । अत एव विख्याता कवयः पण्डिता । विद्वांस इत्यर्थ । धीरो मनीषी ज्ञ प्राज्ञ संख्यावान्पण्डित कवि. । इत्यमरः । यस्य विषये देशे निर्धना वसन्ति तस्य नृपस्य तज्जाड्यं मान्द्यं गुणग्रहणापटुत्वमित्यर्थः । ईश्वरा समर्था । सर्वत्र पूज्यत्वात् । यैः रत्नपरीक्षानभिज्ञै• मणयः अर्घतो मूल्यत. पातिता. । बहुमूल्या अपि अल्पमूल्यत्वेन निर्दिष्टास्ते कुपरीक्षका. कुत्सिताः परीक्षका कुत्स्या निन्द्या• स्यु• । न तु मणयः । शार्दूलविक्रीडितं वृत्तम् ॥

अथ विद्याधनै• का स्पर्धा ते हि नम्रत्वेन गौरवेण च बहु माननीया इति प्रतिपादयन् नृपान् संबोधयति—

१ गहन. २ संसर्ग• ३ शिष्योपदेशागमा . ४ भवन्ति.

हर्तुर्याति न गोचरं किमपि शं पुष्णाति यत्सर्वदा
ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ।
कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं
येषां तान्प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते ॥ १६ ॥

यद्विद्याख्यमन्तर्धनं हर्तुं चौरस्य गोचरं न याति प्रसिद्धधनवन्नयनविषयं न भवति । यत्सर्वदा किमपि अनिर्वाच्यं शं कल्याणं पुष्णाति तनुते । न त्वितरवद् आये दुःखं व्यये दुःखमिति दुःखाय भवति । अर्थिभ्योऽनिशं । न तु काले काले । प्रतिपाद्यमानं दीयमानं परामुत्कृष्टां वृद्धिं प्राप्नोति । नत्वितरवत् क्षयम् । यत्कल्पान्तेपि निधनं नाशं न प्रयाति । एतादृग् विद्याधनं येषां तान् प्रति मानमहङ्कारं त्यजत । कस्तैः सह स्पर्धते । न कोपीत्यर्थः । अत्रोपमानात्प्रसिद्धधनादुपमेयस्य विद्याधनस्याधिक्यप्रतिपादनाद्व्यतिरेकालङ्कारः । वृत्तं पूर्वोक्तम् ।

अधुना उक्तमेव विशदीकुर्वन्नाह—

अधिगतपरमार्थान्पण्डितान्मावमंस्था-
स्तृणमिव लघुलक्ष्मीर्नैव तान्संरुणद्धि ।
अभिनवमदलेखाश्यामगण्डस्थलानां
न भवति बिसतन्तुर्वारणं वारणानाम् ॥ १७ ॥

हे नृप । परमश्चासौ अर्थश्च परमार्थः तत्त्वार्थः । अधिगतः परमार्थो यैस्तान् पण्डितान् विदुषः मावमंस्थाः । मावमानय । यतः लघुः निःसारा तृणमिव लक्ष्मीस्तान्नैव संरुणद्धि । रोद्धुं न शक्नोति । यद्वा लघुश्चासौ लक्ष्मीश्च लघुलक्ष्मीरिति समस्तं पदम् । विज्ञातमहात्तत्त्वा विद्वांसो लक्ष्मीं तृणमिव गणयन्तीत्यर्थः । अभिनवो यो मदो दानं तस्य लेखा तया श्यामानि गण्डस्थलानि येषां तेषां वारणानां बिसतन्तुर्वारणं निरोधको न भवति । मालिनी वृत्तम् ।

यद्यपि विदग्धवैदग्ध्यकीर्त्यपहरणेऽसमर्थः का कथेतरेषामिति दृष्टान्तमुखेनाह—

अम्भोजिनीवननिवासविलासमेव
हंसस्य हन्ति नितरां कुपितो विधाता ।
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां
वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥ १८ ॥

---

१ वृद्धिं परां गच्छति २ भवतु ३ विहार.

नितरामत्यन्तं कुपितो विधाता हंसस्य । अम्भोजिनीनां वनमम्भोजिनीवनं तत्र निवास एव विलासस्तमपहन्ति । न त्वसौ अस्य हंसस्य दुग्धं च जलं च दुग्धजले तयोर्भेदविधौ भेदविषये प्रसिद्धा । वैदग्ध्येन जनिता कीर्तिः वैदग्ध्यकीर्तिस्तामपहर्तुं समर्थः । एवं कुपितो राजा विदुषः स्वविषयाद्विवासयेत्केवलं न तु तेषामनेकविद्यापरिशीलनोत्पन्नचातुरीकीर्तिहरणे प्रभवेदिति भावः । वसन्ततिलका छन्दः ॥

केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला
　न स्नानं न विलेपनं न कुसुमं नालंकृता मूर्धजाः ।
वाण्येका समलंकरोति पुरुषं या संस्कृता धार्यते
　क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥ १९ ॥

के बाहुशिरसि यातीति केयूरः । केयूरा अङ्गदाः पुरुषं न विभूषयन्ति । चन्द्रवदुज्ज्वला हारा मुक्ताहारा अपि न । संस्कृता व्याकरणशुद्धयाऽलंकृता । क्षीयन्ते कालगत्या नश्यन्ति । सततं नित्यमनपायि इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
　विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवता
　विद्या राजसु पूजिता न तु धनं विद्याविहीनः पशुः ॥२०॥

रूपं स्वाभाविकमाकारसौष्ठवम् । तदुक्तं भावप्रकाशे—अव्यारोपितविक्षेप्यबन्धनाद्यैरभूषितम् । यद्रूपितमिवाभाति तद्रूपमिति कथ्यते ॥ इति । विद्या नाम । नाम प्राकाश्ये अभ्युपगमे वा । अधिकं श्रेष्ठम् । उक्तलक्षणादधिकं लोकरञ्जकत्वात् । प्रच्छन्नं यथा तथा गुप्तं रक्षितं धनम् । भोगान्करोतीति भोगकरी । यशश्च सुखश्च यशःसुखे ते करोतीति । उभयत्र कृञो हेतुताच्छील्यानुलोम्येषु ( ३ २. २० ) इति ट टित्वान्ङीप् च । गुरूणामुपदेष्टॄणामपि उपदेष्टृत्वाद्गुरुः । यद्वा श्रेष्ठानामपि श्रेष्ठा । यद्वा गृणाति हितमुपदिशतीति व्युत्पत्त्या गुरुर्हिततमा । अत्र विद्याया रूपधनाद्याकारेण बहुधा निरूपणान्मालारूपकमलंकारः । वृत्तं पूर्वोक्तम् ॥

---

१ ०नि न मू० २ ०तैर्विरभू० ३ परं दैवतम् ४ पूज्यते न हि.

क्षान्तिश्चेत्कवचेन किं किमरिभिः क्रोधोऽस्ति चेद्देहिनां
ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम् ।
किं सर्पैर्यदि दुर्जनाः किमु धनैर्विद्यानवद्या यदि
व्रीडा चेत्किमु भूषणैः सुकविता यद्यस्ति राज्येन किम् ॥२१॥

देहिनां नराणां क्षान्तिश्चेत्कवचेन वर्मणा किम् । फलमिति सर्वत्रानुषङ्गः । न किंचित् । क्रोधश्चित्तक्षोभः । तस्यैवान्तर्दाहकारित्वात्कमरिभिः । सुहृन्मित्रम् । सुहृद्दुर्हृदौ मित्रामित्रयोः ( ५ ४ १५० ) इति निपातनात्साधु । औषधैः किम् । तस्यैव सर्वगन्तापहारकत्वादिति भावः । न अवद्या अनवद्या निर्दुष्टा । प्रशस्तेत्यर्थः । अवद्यपण्य ( पा ३ १ १०१ ) इत्यादिना निपातनात्साधु । किमु धनैः । तस्या एव सर्वाभिलषितसम्पादनहेतुत्वादिति भावः । व्रीडा लज्जा चेत् । तस्या एव सर्वभूषणश्रेष्ठत्वादिति भावः । सुकविता सत्कवित्वं पाण्डित्यम् । तस्या एव सर्वलोकवशीकरणत्वात् ॥

अथ विदुषां गुणवर्णनद्वारा लोकस्थितिहेतुतामाह—

दाक्षिण्यं स्वजने दया परजने शाठ्यं सदा दुर्जने
प्रीतिः साधुजने नयो नृपजने विद्वज्जनेष्वार्जवम् ।
शौर्यं शत्रुजने क्षमा गुरुजने नारीजने धूर्तता
ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥२२॥

स्वजने बन्धुवर्गे । जातावेकवचनम् । एवमुत्तरत्रापि । दाक्षिण्यं छन्दानुवर्तनम् । दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु । इति शाश्वतः । शठस्य भावः शाठ्यं कापट्यम् । अन्यथा वञ्चयेरन् । नृपजने राजसु विषये नयो नम्राचरणम् । अन्यथा कोपप्रसङ्गः । ऋजोर्भाव आर्जवं सरलता । अन्यथा निर्विघ्नेषु । क्षमा सहिष्णुत्वम् । धूर्तता प्रागल्भ्यम् । अन्यथा वशानयेषु । लोकस्थितिः लोकव्यवस्था नीत्याचरणं वा ॥

अधुना सत्सङ्गते सर्वप्रकारकं श्रेयस्करत्वमाह—

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति ।

---

१ वचनेन २ परिजने ३ विद्वज्जनेष्वार्जवं ४ कान्ता

चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्संगतिः कथय किं न करोति पुंसाम् ॥ २३ ॥

सत्सङ्गतिः पुंसां किं न करोतीति कथय । अपि तु सर्वमेव श्रेयो वितरति । धियः बुद्धेर्जाड्यं मान्द्यं हरति । मानस्य उन्नतिः आधिक्यापादनं तद्दिशति करोति । अपाकरोति नाशयति । वृत्तं वसन्ततिलका ॥

सम्प्रत्येषां लोकोत्तर महिमातिशयं वर्णयति—

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ॥ २४ ॥

शोभनं कृतं सुकृतं तदेषामस्तीति सुकृतिनः । कृतं काव्यनिर्मितिः । पक्षे रसायनं च । सिद्धः रसः शृङ्गारादिः पक्षे पारदः येषां ते रससिद्धाः । यद्वा ब्रह्मवेदिनः । रसो वै सः इतिश्रुतेः । वाहिताग्न्यादिषु ( २. २. ३७ ) इति निष्ठायाः परनिपातः । यद्वा रसे सिद्धाः । ते प्रसिद्धाः कवीश्वराः कविकुलधुरीणाः पण्डितोत्तमा वा । पक्षे सिद्धपारदाः । येषां यश एव कायः तत्र । पारदोपि शरीरमजरामरं कुरुते इति रसक्रियावेदिनः । श्लेषालङ्कारः ॥

सूनुः सच्चरितः सती प्रियतमा स्वामी प्रसादोन्मुखः
स्निग्धं मित्रमवञ्चकः परिजनो निःक्लेशलेशं मनः ।
आकारो रुचिरः स्थिरश्च विभवो विद्यावदातं मुखं
तुष्टे विष्टपहारिणीष्टदहरौ संप्राप्यते देहिना ॥ २५ ॥

सत् चरितं यस्यासौ । उद्गतं मुखं यस्यासौ उन्मुखः । प्रसादस्योन्मुखः प्रसादोन्मुखः । अवञ्चकः अप्रतारणाशीलः । निःशेषेण गतः रागद्वेषादिजन्यस्य संसारोत्पन्नस्य वा क्लेशस्य लेशो यस्मात् तत्तथा । विद्यया अवदातं शुद्धं भास्वरं वा मुखम् । एनत्सर्वं विष्टपं जगद् हरति आकर्षतीति तच्छीलः तस्मिन् । इष्टं ददातीति तस्मिन् । हरौ इ० । शार्दूलवि० वृत्तम् ॥

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् ।
तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा
सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥२६॥

१ कष्टहारिणि हरौ. २ गात.

प्राणानामाघातस्तस्मात् । संयमः मनसो नियमनम् । युवतीनां जनः युवतिजनः । परेषां युवतिजनस्य कथाः तासु मूकभावः । तृष्णाया स्रोतः प्रवाहः तस्य विभङ्गः । न उपहतः अनुपहतः अनुपहतः विधिर्यस्य । स्रग्धरावृत्तम् ॥

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमजना न परित्यजन्ति ॥ २७ ॥

नीचैः क्षुद्रैः । ये विघ्नभयान्न किमप्यारभन्ते ते नीचा इत्यर्थः । स्पष्टमन्यत् । वसन्ततिलका वृत्तम् ॥

इदानीं सतामनन्यसाधारणं वृत्तमाह—

प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरं
त्वसन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः ।
विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ २८ ॥

न्यायादनपेता न्याय्या । धर्मपथ्यर्थन्यायादनपेते ( ४ ४ ९२ ) इति यत् । वृत्तिर्वर्तनम् । मलिनं पापकर्म । असूनां भङ्गः असुभङ्गः तस्मिन् । प्राणभङ्गेऽपि न कुर्युरित्यर्थः । स्थेयं स्थितिः । असिधारा इवासिधारायां चङ्क्रमणमिव वा व्रतमसिधाराव्रतम् । तदुक्तम्–यत्रैकशयनस्थापि प्रमदा नोपभुज्यते । असिधाराव्रतं नाम वदन्ति मुनिपुङ्गवाः । उद्दिष्टमुपदिष्टम् । सन्तो निसर्गादेवंशीला इत्यर्थः । शिखरिणी वृत्तम् ॥

अथ मानशौर्यपद्धतिः—

क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्रायोऽपि कष्टां दशा-
मापन्नोऽपि विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि ।
मत्तेभेन्द्रविभिन्नकुम्भकवलग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥ २९ ॥

क्षुधा क्षामः क्षीणः क्षुत्क्षामः । क्षायो मः इति मत्वम् । जरया कृशः जराकृशोऽपि । शिथिलप्रायः बाहुल्येन विश्लथाङ्गोऽपि । प्रायो बाहुल्यतुल्ययोः इति मेदिनी । कष्टां कठिनामवस्थां प्राप्तोऽपि । विपन्ना दीधितिः तेजः यस्य । नष्ट-

१ सद्भिर्मुनिभिर्वा इत्य०. २ प्राणा ३ दीनाम् ४ उन्मत्तेभ ५ शिथिल

कान्तिरपीत्यर्थः । इभेषु इन्द्र इव इभेन्द्रः । मत्तश्चासौ इभेन्द्रश्च मत्ते० । विभिन्नौ च तौ कुम्भौ च विभि० । मत्तेभेन्द्रस्य विभिन्नकुम्भौ तयोः कवलः । पिशितेति पाठे तत्र यत्पिशितं मांसं । तस्य ग्रासः मत्त--ग्रासः । स एव गुरुस्तस्मिन्बद्धा स्पृहा येन सः । तथा च मानेन महान्तः उन्नतास्तेषाम् । अग्रे सरतीत्यग्रेसरः । पुरोऽग्रतोऽग्रेषु सर्तेः ( ३. २ १८ ) इति टप्रत्ययः । स केसरी शुष्कं तृणमत्ति किम् । नैवात्तीत्यर्थः । अप्रस्तुतप्रशंसालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ।

अथ सर्वेषां सत्त्वानुरूपैव प्रवृत्तिरित्याह—

स्वल्पस्नायुवसावशेषमलिनं निर्मांसमप्यस्थिकं
श्वा लब्ध्वा परितोषमेति न तु तत्तस्य क्षुधाशान्तये ।
सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् ॥२०॥

स्वल्पाः स्नायवश्च वसा मेदश्च स्नायुवसं तस्य अवशेषस्तेन मलिनम् । अस्थ्यं कुत्सितं वास्थि अस्थिकम् । हिनस्तीति सिंहः । पृषोदरादिः । तदुक्तं सिंहो वर्णविपर्ययात् । कृच्छ्रं गतः कृच्छ्रगतः कष्टावस्थां प्राप्तः । सत्त्वानुरूपं स्वशक्त्यनुगुणं स्वमनउत्साहानुरूपं वा फलं वाञ्छति । वृत्तं पूर्वोक्तम् ॥

सम्प्रति नीचानीचजनयोश्चेष्टाप्रकारमाह—

लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनं च ।
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ २१ ॥

चरणयोरवपातः चरणावपातः । पुमान्गौः पुङ्गवः । विशेषणसमासः । गोरतद्धितलुकि ( ५-४-९२ ) इति समासान्तष्टच् । गजपुङ्गवः गजश्रेष्ठः । स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥ इत्यमरः । चाटुशतैः अनेकप्रियोक्तिभिः । अनुनयवाक्यैरित्यर्थः । वसन्ततिलका वृत्तम् ॥

परिवर्तिनि संसारे मृतः को वा न जायते ।
स जातो येन जातेन याति वंशः समुन्नतिम् ॥ २२ ॥

परिवर्तिनि धर्माधर्मवशात्परिवर्तमाने । को वा मृतः सन् न जायते उत्पद्यते

१ स्वल्पम् । २ वसक । ३ अस्थि गो० ४ न पुनस्तस्यात्र ५ यातं ।

भवति । यद्वा को वा न मृतः को वा न जायते । सर्वोऽप्युत्पद्यते म्रियते च । तथा च भगवद्वचन—जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च । इति । स एव परमार्थतो जात इत्यर्थः ॥

अथ मानोन्नतस्य वर्तनक्रममाह—

**कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः ।**
**मूर्ध्नि वा सर्वलोकस्य विशीर्यते वनेऽथवा ॥ ३३ ॥**

प्रशस्तं मनोऽस्यास्तीति मनस्वी तस्य । द्वयी द्विप्रकारा वृत्तिः । मूर्ध्नि अग्रे इत्यर्थः । सर्वेषामग्रणीर्भवति । अन्यथा मानाद्वन एव जीर्णो भवतीत्यर्थः । उपमालङ्कारः ॥

अधुना तेजोविशिष्टस्यैवोत्कृष्टतामाह—

**सन्त्यन्येऽपि बृहस्पतिप्रभृतयः सम्भाविताः पञ्चषा-**
**स्तान्प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते ।**
**द्वावेव ग्रसते दिनेश्वरनिशाप्राणेश्वरौ भास्वरौ**
**भ्रातः पर्वणि पश्य दानवपतिः शीर्षावशेषीकृतः ॥ ३४ ॥**

अन्ये वक्ष्यमाणदिवाकरनिशाकराभ्यामित्यर्थः । सम्भाविता बहुमताः । पञ्च वा षड् वा पञ्चषाः । सङ्ख्ययाव्यया—( २ २ २५ ) इत्यादिना बहुव्रीहिः । बहुव्रीहौ सङ्ख्येये डजबहुगणात् ( ५ ४ ७३ ) इति समासान्तो डच्प्रत्ययः । विशेषेषु तेजोगरिष्ठेषु विक्रमे रुचिर्यस्य सः । वैरायते कलहं करोति । शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ( ३ १ १७ ) इति क्यङ् । अकृत्सार्वधातुकयोर्दीर्घः ( ७ ४ २५ ) इति दीर्घः । किन्तु हे भ्रातरित्यादरे । स पूर्वोक्तः । शीर्षमवशेषो यस्य स शीर्षावशेषः । न शीर्षा० अशीर्षावशेषः । अशी० शीर्षावशेषः सम्पद्यमानः कृतः शीर्षा० कृतः । शीर्षावशेषाकृतिरिति पाठे शीर्षमेवावशेषो यस्याः सा आकृतिर्यस्येत्यर्थः । शिरोमात्रावशिष्टोऽपीत्यर्थः । दानवपतिः राहुः । पर्वणि दर्शे पूर्णिमायां च सूर्यं निशापतिं च ग्रसते । यतस्तौ भास्वरौ । अतएव न्यूनयुक्तोऽपि महान्महत्कार्यं कर्तुमेव व्यवस्यतीत्यर्थः । शार्दू० वृत्तम् ॥

---

१ हृ गते स्तो मनस्विनाम्, मनीषिणः २ शीर्यते वन एव वा ३ भासुरौ ४ भ्रातः ५ शीर्षावशेषाकृतिः

अथ महतां चरित्रमाहात्म्यमाह—

> वहति भुवनश्रेणीं शेषः फणाफलकस्थितां
> कमठपतिना मध्येपृष्ठं सदा स च धार्यते ।
> तमपि कुरुते क्रोडाधीनं पयोधिरनादरा-
> दहह महतां निःसीमानश्चरित्रविभूतयः ॥ ३५ ॥

फणाः सहस्रसंख्याकाः एव फलकं । विस्तीर्णफणामण्डलमित्यर्थः । तत्र स्थिताम् । भुवनानां चतुर्दशानां श्रेणीं पंक्तिम् । कमठपतिना आदिकूर्मेण । पृष्ठस्य मध्ये मध्येपृष्ठम् । पारे मध्ये षष्ठया वा इत्यव्ययीभावः । धार्यते उह्यते । पयोधिः तमपि अनादरादनायासेनैव क्रोडे अधि इति क्रोडाधीनस्तम् । न ना क्रोडं भुजान्तरम् । इत्यमरः । करोति । पयोधिः प्रलयार्णवः क्रोडः आदिवराहस्तदधीनामिति केचित् । अहहेत्याश्चर्ये । अहहेत्यद्भुते खेदे इत्यमरः । अत्र पूर्वपूर्वस्योत्तरं प्रति उत्कर्षावहत्वान्मालादीपकमलंकारः । अर्थान्तरन्यासश्च । हरिणीवृत्तम् ॥

मानशौर्यवता पुरुषेण प्राणव्ययेनापि स्वमाहात्म्यमेव रक्षणीयं न तु जीवितहेतोः कश्चिच्छरणं गन्तव्य इत्याह—

> वरं पक्षच्छेदः समदमघवन्मुक्तकुलिश-
> प्रहारैरुद्गच्छद्बहलदहनोद्गारगुरुभिः ।
> तुषाराद्रेः सूनोरहह पितरि क्लेशविवशे
> न चासौ संपातः पयसि पयसां पत्युरुचितः ॥ ३६ ॥

तुषाराद्रेः हिमाचलस्य सूनोः मैनाकस्य । उद्गच्छन् यो बहलः दहनस्य उद्गारो निःसरणं तेन गुरुभिः दुःसहैः । मदेन सहितः समदः यो मघवा तेन विमुक्तस्य कुलिशस्य वज्रस्य प्रहारैः । पक्षच्छेदः वरम् । न तु पितरि क्लेशेन पक्षच्छेदजनितदुःखेन विवशे विह्वले सति । असौ संपातः उचितः योग्यः । अत्रोद्गारशब्दस्य गौणत्वान्न ग्राम्यतादोषः । प्रत्युत सौन्दर्यातिशयं पुष्णाति । तदुक्तं दण्डिना—निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥ इति । पुरा किल—हिरण्याक्षमायया उत्तररक्षाणां स्वस्थानं विहाय लोकोपद्रवाय प्रवृत्तानां पर्वतानां कोपवशात्पक्षच्छेदोद्यते इन्द्रे मैनाकः समुद्रमध्ये निलीयातिष्ठदिति पौराणिकी कथात्रानुसंधेया ॥

---

१ कष्टम् २ त्रिधा०. ३ निधिरा०. ४ प्रागयग., प्राणोन्त्र:. ५ न्धिगे. ६ मर्तु.

मानी पुरुष परकृत निकार न सहतेति सदृष्टान्तमाह—

यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः ।
तत्तेजस्वी पुरुषः परकृतनिकृतिं कथं सहते ॥ ३७ ॥

यद्यस्मात्कारणात् । अविद्यमाना चेतना यस्यासौ अचेतन निर्जीवोऽपि । इनकान्त सूर्यकान्त । सवितु पादै मयूखै । चरणतलैश्च । स्पृष्ट आक्रान्त । ताडितश्चेति ध्वन्यते । प्रज्वलति तेज उद्गिरति । कोपोद्दीप्तश्च भवतीति गम्यते । तत्तस्मात्कारणात् । परेणान्येन शत्रुणा वा कृता निकृतिं निकारम् । न कथंचिदपि सहते इ र्थ ॥

वयस्तेजसो न हेतुरिति विनिगमयति—

सिंह शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ।
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतु ॥ ३८ ॥

कपोला भित्तय इव कपोलभित्तय । भित्तिशब्द प्राशस्त्यार्थे । मदेन दानवारिणा मलिना कपोलभित्तयो येषां तेषु । प्रकृति स्वभाव । सत्त्ववतां बलशालिनाम् । न खलिवति-कालिदासोऽप्याह-तेजसां हि न वय समीक्ष्यते इति ॥

अथार्थपद्धति । तत्रादावर्थमहैकपराणां मतमभिसधायाह—

जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छतु
शीलं शैलतटात्पतत्वभिजन सन्दह्यतां वह्निना ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु न केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ ३९ ॥

जातिर्ब्राह्मणत्वादि रसातल पृथ्वीतल यातु । नश्यतु इत्यर्थं । शील सद्वृत्तं पततु विदीर्णं भवतु । अभिजनो वश । कुलीनतेति यावत् । वैरिणि सत्ता पराभवी संक्षोभकारित्वाच्छत्रुभूते । वय केवलमर्थमेव साधयाम इत्यर्थ । ननु उक्तगुणानां प्रध्वंसेनापि किमित्यर्थलाभ इष्यते इति चेत् येनेति । तृणलवप्रायास्तृणलवतुल्या । तद्वल्लघव इत्यर्थ । तदुक्तं रामायणे-धनमर्जय काकुत्स्थ धनमूलमिदं जगत् । अन्तर नाभिजानामि निर्धनस्य मृतस्य च ॥ इति ।

१ विशन्ति २ गच्छतात्ः ३ अमी.

तानीन्द्रियाणि सकलानि तदेव कर्म
सा बुद्धिरप्रतिहता वचनं तदेव ।
अर्थोष्मणा विरहितः पुरुषः स एव
त्वन्यः क्षणेन भवतीति विचित्रमेतत् ॥ ४० ॥

सकलानि अक्षतानि इन्द्रियाणि तानि यथापूर्वमवस्थितान्येव । अप्रतिहता केनाप्यंशेनाहीना बुद्धिः सैव । पुरुषोपि स एव । अर्थस्योष्मा अर्थोष्मा तेन विरहितः क्षणेनान्यो भवतीति एतद् विचित्रमित्यन्वयः । वसन्ततिलका वृत्तम् ।

अधुनार्थनिष्ठा एव सर्वे गुणा इत्याह—

यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान्गुणज्ञः ।
स एव वक्ता स च दर्शनीयः
सर्वे गुणाः काञ्चनमाश्रयन्ते ॥ ४१ ॥

कुले जातः कुलीनः । अभिजनवान् । कुलात्खः इति खप्रत्ययः । श्रुतं श्रवणं । नपुंसके भावे क्तः । तदस्यास्तीति श्रुतवान् ज्ञानसंपन्नः । आश्रयन्ते । उक्तगुणराशिरित्यर्थः । काव्यलिङ्गमलङ्कारः । वृत्तमुपजातिः । अस्य समानार्थः श्लोकः—यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः । यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः । अपरश्च-ब्रह्महापि नरः पूज्यो यस्यास्ति विपुलं धनम् । शशिनस्तुल्यवंशोपि निर्धनः परिभूयते ॥

*अथार्थादेर्विनाशप्रकारमाह—*

दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालना-
द्विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् ।
ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रया-
[1]न्मैत्री चाप्रणयात्समृद्धिरनयात्त्यागप्रमादाद्धनम् ॥ ४२ ॥

दुष्टो मन्त्रः षाड्गुण्यचिन्तालक्षणः यस्य स दुर्मन्त्रः । दुष्टा मन्त्रिणो यस्य इति वा । तस्य भावो दौर्मन्त्र्यं । तस्मात् । विनश्यति । परैः राज्याद्यपहरणात् । तदुक्तं—दुर्मन्त्रो राज्यनाशायेति । यतिः सङ्गात् । तस्य कामक्रोधादिहेतुत्वात् ।

१ दुर्मन्त्रात्. २ त्यागप्रमादात्.

सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते । इत्यादिगीतावचनात् । लालनात् । यत उक्तम्—लालनाद्बहवो दोषास्ताडनाद्बहवो गुणाः । तस्मात्पुत्रं च शिष्यं च ताडयेन्न तु लालयेत् ॥ अनध्ययनाद्यतो विप्रत्वं विद्यानिबन्धनम् । तदुक्तं—जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥ इति । कुत्सिततस्तनयः कुतनयः । तदुक्तं—कोटरान्तर्भवो वह्निस्तरुमेकं दहिष्यति । कुपुत्रस्तु कुले जातः स्वकुलं नाशयेत्परम् ॥ मद्यान्मद्यसेवनात् । अनवेक्षणादपरामर्शनात् । अप्रणयादननुरागप्रदर्शनात् । अनयाद्दनीत्याश्रयणेन । त्यागे व्यये प्रमादादनवधानतया । शार्दूलवि॰ छन्दः ।

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ ४३ ॥

दानं पात्रे व्ययः । नाशो दानधर्माद्यभावे चौरादिनापहरणम् । न ददाति वित्तमिति शेषः । तृतीया नाशलक्षणा । अतो धनाढ्येन दानभोगपरेण भाव्यमित्यर्थः ॥

अथ दानशौण्डस्य धनराहित्यमपि शोभावहमित्याह—

मणिः शाणोल्लीढः समरविजयी हेतिनिहतो
मदक्षीणो नागः शरदि सरिदाश्यानपुलिना ।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु जनाः ॥ ४४ ॥

शाणः शस्त्रनिशातनसाधनोपलविशेषः । तस्मिन्नुल्लीढः । तत्र घर्षणेनोत्तेजित इत्यर्थः । हेतिः शस्त्रम् । हेतिभिर्निहतः क्षतः । मदेन दानस्रवणेन । नागो गजः । आश्यानमीषच्छुष्कम् । संयोगादेरातो धातोर्यण्वतः (८-२-४३) इति निष्ठानत्वम् । पुलिनं यस्याः सा । कलाशेषः षोडशांशमात्रावशिष्टः । कला तु षोडशो भागः इत्यमरः । स च देवतादिभिः पीतशेषत्वाच्छोभते । तदुक्तं कालिदासेन—पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः । मृदिता क्लिष्टेत्यर्थः । बालवनिता मुग्धाङ्गना । गलितः व्ययं प्रापितः विभवो येषाम् । तनिम्ना कार्श्येन । पृथ्वादिभ्य इमनिच् । अत्र प्रस्तुतानां जनानाम-

1 हेतिहतो. 2 सरित् शरानुलिना. 3 कृशता. 4 यथार्थेषु जनाः. 5 नृपा, नराः.

प्रस्तुतानां च मण्यादीनां शोभारूपधर्मस्य सकृदुपादानाद्दीपकमलङ्कारः । शिखरिणी वृत्तम् ॥

इदानीं नृणां धनाभावतत्सद्भावावस्थाकृतमाचरणभेदं निर्दिशति—

परिक्षीणः कश्चित्स्पृहयति यवानां प्रसृतये
　स पश्चात्संपूर्णः कलयति धरित्रीं तृणसमाम् ।
अतश्चानैकान्त्याद्गुरुलघुतयार्थेषु धनिना-
　मवस्था वस्तूनि प्रथयति च संकोचयति च ॥ ४५ ॥

कश्चिद्धनिकः परिक्षीणोऽकिंचनतां गतः सन् । प्रसृतिः निकुब्जः पाणिः । यवानां प्रसृतिर्लक्षणया प्रसृतिमात्रयवास्तेभ्य इत्यर्थः । स्पृहयति । स्पृहेरीप्सितः ( १-४-३६ ) इति सम्प्रदानत्वाच्चतुर्थी । स पश्चात्पुर्दैवात्संपूर्णः धनसंपन्नः सन् । तृणेन समां कलयति मनुते । धनमदेन सर्वं जगत्तृणमिव गणयतीत्यर्थः । अतः अर्थेषु यवधरित्र्यादिषु पदार्थेषु विषये गुरुलघुतया महत्त्वाल्पत्वभावेन । न एकान्तमनैकान्तं तस्य भावोऽनैकान्त्यं व्यभिचारः । तस्मात् । गुरूणि गुरुत्वमेव लघुनि लघुत्वमेवेति नियमाभावात् । धनिनामवस्था वस्तूनि प्रथयति क्षीणावस्था यवादि लघ्वपि वस्तु गुरूकरोति । संकोचयति च । संपन्नावस्था गुर्वपि वस्तु लघूकरोतीत्यर्थः । अतस्तत्त्ववेदिना पुरुषेण सर्वदा समबुद्धिना भवितव्यमित्यर्थः ॥ वृत्तं पूर्वोक्तम् ।

अथ राजानं संबोधयन्नर्थसाधनोपायमुपदिशति—

राजन्दुधुक्षसि यदि क्षितिधेनुमेतां
　तेनाद्य वत्समिव लोकममुं पुषाण ।
तस्मिंश्च सम्यगनिशं परिपोष्यमाणे
　नानाफलं फलति कल्पलतेव भूमिः ॥ ४६ ॥

क्षितिर्धेनुरिवेत्युपमितसमासः । न तु क्षितिरेव धेनुरिति रूपकम् । वत्समिवेत्युपमालिङ्गात् । तां दुधुक्षसि यदि दोग्धुमिच्छसि चेत् । दुहेः सन्नन्ताल्लट् । वत्सं तर्णकमिव । परिपोष्यमाणे परिपाल्यमाने इत्यर्थः । नानाफलं धनधान्यादिकम् । फलति निष्पादयति । वसन्ततिलका वृत्तम् ॥

१ नेकस्या, नकान्त्या. २ तनाय. ३ ०पुष्यमाणे. ४ फले.

अधुना प्रसङ्गतो राजनीतेः स्वरूपवैविध्यमाह—

सत्याऽनृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ॥
नित्यव्यया प्रचुरनित्यधनागमा च
वाराङ्गनेव नृपनीतिरनेकरूपा ॥ ४७ ॥

सत्या सत्यपरा । कदाचित्कार्यानुरोधादसत्या अनृताश्रया । परुषा कठोरभाषिणी । कदाचित्स्वेष्टसिद्धिहेतोर्मधुरभाषिणी च । हिंस्रा घातुका । शरारुर्घातुको हिंस्र इत्यमरः । नमिकम्पि (३-२-१६७) इत्यादिना रप्रत्ययः । दयालुः कारुणिका । स्पृहिगृहि (३-२-१५८) इत्यादिनालुच्प्रत्ययः । अर्थः परो यस्याः सा । धनसंग्रहपरेत्यर्थः । वदान्या दानशौण्डा । नित्यं व्ययो यस्यां यस्याश्च । प्रचुरो बहुलो नित्यं धनागमो यस्यां यस्याश्च । वाराङ्गना वेश्या । अनेकरूपा बहुप्रकारा । अत्र श्रवणमात्रेणाभासमानो विरोधो वाराङ्गनेवेत्युपमयाङ्गाङ्गिभावेन सङ्कीर्यते । वस० वृत्तम् ॥

अथ नृपाश्रयफलमाह—

आज्ञा कीर्तिः पालनं ब्राह्मणानां दानं भोगो मित्रसंरक्षणं च ।
येषामेते षड्गुणा न प्रवृत्ताः[1] कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥ ४८ ॥

आज्ञा अप्रतिहतशासनत्वमित्यर्थः । पार्थिवस्योपाश्रयेण कोऽर्थः । न कोऽपीत्यर्थः । यद्वा हे पार्थिव उपाश्रयेण तवेत्यर्थादिति योज्यम् । केचिद् येषां राज्ञां एते गुणा न प्रवृत्तास्तेषामुपाश्रयेण हे पार्थिव इत्यादि योजयन्ति । शालिनी वृत्तम् ॥

अथार्थाप्तिकामेन कार्पण्यं न गन्तव्यं लाभालाभौ दैवाधीनौ इत्याह—

यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ ततो नाधिकम् ।
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः[2]
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥४९॥

निजभालमेव पट्टस्तस्मिन् लिखितम् । स्तोकमल्पम् । मरुस्थलेऽपि उपरभूमा-

१ भाषिणी, २ वेदया०, ३ राजनानाम् ४ नियतम्

बपि नितरां साकल्येन । मेद. कनकाचलस्तत्रापि । कृपणो दीनाम् । मा कृथा मा कुरु । अधिकधनप्राप्तेरसंभवादिति भाव । कृञो टटि थास् । तनादित्वेपि सिचो नित्यलोपविधानात्र सिच् । न माङ्योग इति अट्प्रतिषेध । अत्र दृष्टान्तमाह कूप इति । शार्दूल० वृत्तम् ॥

त्वमेव चातकाधारोऽसीति केषां न गोचरः ।
किमम्भोदवरास्माकं कार्पण्योक्तिं प्रतीक्षसे ॥ ५० ॥

चातकानामाधार । इति एवंरूपेण । गोचरः ज्ञातः । कार्पण्यस्योक्तिः ताम् । एवं हे दातृवरास्माकं दीनोक्तिमन्तरेणैवापदं धनत्यागेनापहर्तुमर्हसीति कंचिदनिर्कं प्रस्तुतिः । अप्रस्तुतप्रशंसालङ्कारः ।

इदानीं सर्वोपि श्रीमान्दाता न भवत्यत. सर्वस्य पुरतो दीनं वचो न वक्तव्यमित्याह—

हे रे चातक सावधानमनसा मित्र क्षणं श्रूयता-
मम्भोदा बहवो हि सन्ति गगने सर्वेपि नैतादृशाः ।
केचिद्वृष्टिभिरार्द्रयन्ति वसुधां गर्जन्ति केचिद्वृथा
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वच ॥ ५१ ॥

अवधानेन सहितं सावधानं सावधानं च तन्मनश्च तेन । एतादृश—ये कार्पण्योक्तिं प्रतीक्षेरन् । यद्वा ये दातारो न भवन्ति । अलङ्कार पूर्वोक्त. । शार्दू० वृत्तम् ॥

अथ दुर्जनपद्धतिः—

अथ धनसम्पन्नोपि दुर्जनोऽनभ्युपगम्य एवेति मनसिकुर्वन्नर्थपद्धतेरनन्तरं दुर्जनपद्धतिं निरूपयति—

अकरुणत्वमकारणविग्रहः ।
परधने परयोषिति च स्पृहा ॥
सुजनबन्धुजनेष्वसहिष्णुता
प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥ ५२ ॥

अविद्यमानं कारणं यस्यासौ अकारणः । अकारणश्चासौ विग्रहश्च अकारणविग्रह निष्कारणकलहः । परस्य योषित् तस्याम् । असहिष्णुता असहनशीलत्वम् । प्रकृतिसिद्धं स्वभावसिद्धम् । द्रुतविलम्बितं वृत्तम् ॥

१ चातकाधार इति, २ ०नि प्रतीक्ष्यते ३ ष्के ४ धरणीम्, ५ चैके

विद्यादिगुणसम्पन्नोपि दुर्जनस्त्याज्य. किमु वक्तव्य गुणविहीन इति सदृष्टान्तमाह—

दुर्जन परिहर्तव्यो विद्यया भूषितोपि सन् ।
मणिनालंकृत सर्प किमसौ न भयकर ॥ ५३ ॥

असौ भयकरो न किम् । अपि तु भयकर एवातो दूरतस्त्याज्य इत्यर्थः । दृष्टान्तालङ्कारः ॥

अथ दुर्जनस्य पौरोभाग्यं प्रदर्शयति—

जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भ शुचौ कैतवं
शूरे निर्घृणता मुनौ विमतिता दैन्य प्रियालापिनि ।
तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्ति. स्थिरे
तत्को नाम गुणो भवेत्स गुणिनां यो दुर्जनैर्नाङ्कित. ॥ ५४ ॥

ह्रीमति लज्जागुणयुक्ते । गण्यते दुर्जनैरित्यर्थात् । न तु विनयशालीनत्वम् । व्रते रुचिर्यस्य । दम्भो न तु धर्मपरायणत्वम् । शुचौ शुद्धचित्ते । कितवस्य भावः कैतव शाठ्यम् । मुनिर्मननशील । यद्वा वाचयमो मुनि इत्यमर । अथवा दु खेष्वनुद्विग्नमना सुखेषु विगतस्पृह । वीतरागभयक्रोध. स्थिरधीर्मुनिरुच्यते ॥ इत्युक्तलक्षण । तस्मिन् विमतिता बुद्धिराहित्यम् । न तु परमात्मानुसधानपरत्वम् । तेज. पराक्रमस्तद्वति अवलिप्तता दृप्तत्वम् । निन्दित मुखमस्य मुखरस्तस्य भावो मुखरता । दुर्मुखे मुखराबद्धमुखौ इत्यमर । 'खमुखकुञ्जेभ्य उपसंख्यानम् । इति रप्रत्यय । न तु वाग्मित्वम् । तत्तस्मात्कारणात् । नाङ्कितो न दूषित । न कोपीत्यर्थ । शार्दूल० वृत्तम् ॥

अधुना गुणावगुणानां प्रधानतमानाह—

लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः
सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् ।
सौजन्यं यदि किं निजैः स्वमहिमा यद्यस्ति किं मण्डनैः
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥ ५५ ॥

अगुणेन दुर्गुणेन किम् । न किमपीत्यर्थ । तस्य सर्वदुर्गुणानां मूलत्वात् । तदुक्त

---

१ विद्यालंकृत २ भूषित ३ शुचौ ४ रुचौ, भार्गेरे. ५ वक्तव्यशक्तिरिरे ६ गुणिताम् ७ दुर्जनानां मन ८ बलेन म०. ९ जने.

लोभमूलानि पापानीति । उक्तं च भागवते-यशो यशस्विना शुद्धं श्लाघ्या ये गुणिना गुणाः । लोभः स्वल्पोपि तान्हन्ति श्वित्रं रूपमिवेप्सितम् ॥ पिशुनता दौर्जन्यम्। सत्यं चेदिति । यतः सत्यमेव परो धर्मः । तथा च श्रुतिः —सत्ये सर्वं प्रतिष्ठितं तस्मात्सत्यं परमं वदन्ति । इति । मौनात्सत्यं विशिष्यते इति मनुरपि । शुचि-मन इति । मनःशुद्धताया मोक्षहेतुत्वात् । स्मर्यते च-यः स्वात्मनीर्थे भजते विनिष्क्रिय स सर्वविम्मवंगतोऽमृतो भवेत् ॥ इति । किं मृत्युनेति । तदुक्तं भगवद्गीतायाम्–संभावितस्य चाकीर्तिर्मरणादतिरिच्यते । इति । शार्दूल० वृत्तम् ॥

कदा कान्युद्वेगकारणीत्याह—

> शशी दिवसधूसरो गलितयौवना कामिनी
> सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
> प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
> नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ५६ ॥

दिवसे धूसर उपहततेजाः शशी । अविद्यमानान्यक्षराणि शास्त्रज्ञानं यस्मि-न् । सु शोभना आकृतिर्यस्य तस्य । धनमेव परमयनं यस्य। धनलुब्ध इत्यर्थः । शल्यानि शल्यवद् सद्द खकारीणीत्यर्थः । समुच्चयालङ्कारः । तत्सिद्धिहेता-वेकस्मिन्यत्रान्यत्तत्करं भवेत् । समुच्चयोसौ । इति लक्षणात् । पृथ्वी वृत्तम् ॥

अथात्यन्तक्रोधनशीलाना नृपाणामनुग्रहस्यास्थैर्यं सदृष्टान्तमाह—

> न कश्चिच्चण्डकोपानामात्मीयो नाम भूभुजाम् ।
> होतारमपि जुह्वानं स्पृष्टो दहति पावकः ॥ ५७ ॥

चण्ड कोपो येषाम् । आत्मीय आत्मीयत्वेन परिगृहीत इत्यर्थः । जुह्वानं जुहोति तच्छीलस्तम् । हविर्दानेनोपचरन्तमिति यावत् । हु दानादनयो इति धातो स्ताच्छील्ये चानश् । अत ईदृशो राजा सावधानेनाश्रणीय इति भाव. । वृत्तमानुष्टुभम् ॥

अथ क्रमप्राप्तं सेवाया दुष्करत्वमाह—

> मौनान्मूकः प्रवचनपटुश्चाटुलो जल्पको वा
> धृष्टः पार्श्वे वसति च वसन्दूरतोप्यप्रगल्भः ।

१ दुर्गति.. २ जुह्वतमपि. ३ वातुल, वाचक. ४ वसति च तदा, दूरतश्च.

क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ ५८ ॥

मौनात् मौनं धारयति चेन्मूक इत्युच्यते । सेवक इति शेषः । प्रवचने पटु चेत् वाटुल चाटुकारः । जल्पतीति जल्पः । पचाद्यच् । स्वार्थे कः । यद्वा कुत्सितो जल्पः जल्पकः । धृष्टो निर्भीकः । अप्रगल्भोऽप्रौढः । न सहते परिभवादिकमिति शेषः । अभिजातः कुलीनः । योगिनां त्रिकालज्ञानिनामपि । किमुतान्येषाम् । अगम्यो ज्ञातुमशक्यः । अत्र सेवाधर्मस्य योगिगम्यत्वेऽप्यगम्यत्वोक्तेः सम्बन्धेऽसम्बन्धरूपातिशयोक्तिः । मन्दाक्रान्ता वृत्तम् ॥

अतिनीचः सर्वथा त्याज्य इत्याह—

उद्भासिताखिलखलस्य विशृङ्खलस्य
प्राग्जातविस्मृतनिजाधमकर्मवृत्तेः ।
दैवादवाप्तविभवस्य गुणद्विषोऽस्य
नीचस्य गोचरगतैः सुखमास्यते कैः ॥ ५९ ॥

उद्भासिताः प्रकाशिताः अखिलाः खला येन तस्य । विगता शृङ्खला विधिनिषेधरूपा यस्य तस्य । स्वैरवृत्तेरित्यर्थः । प्राग्जाता पश्चात् विस्मृता प्राग्जातविस्मृता । कर्मभिर्वृत्तिः कर्मवृत्तिः । प्राग्जातविस्मृता निजा अधमा कर्मवृत्तिर्येन । •विस्तृतेति पाठे प्राग्जातानि पश्चाद्विस्मृतानि निजाधमकर्माणि तत्र वृत्तिर्यस्य । अवाप्तो विभवो येन तस्य । गुणान्द्वेष्टीति गुणद्विट् तस्य । वसन्ततिलका वृत्तम् ॥

दुर्जनसुजनमैत्रीप्रकारं निर्दिशति—

आरम्भगुर्वी क्षयिणी क्रमेण
लघ्वी पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्धपरार्धभिन्ना
छायेव मैत्री खलसज्जनानाम् ॥ ६० ॥

आरम्भे गुर्वी गुरुः । वृद्धेत्यर्थः । लघ्वी स्वल्पा । एवं खलस्य मैत्री प्रथमं गुर्वी पश्चात्क्षयिणी भवति सुजनस्य तु तद्विपरीता । यथासंख्यमकीर्णोपमालंकारः । वृत्तमुपजातिः ।

---

१ प्रेशाद, प्रागेव. २ विसृत ३ भाव्यते.

अधुना दुर्जनाना निष्कारणवैरित्वं प्रतिपादयन्नुपसंहरति—

मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् ।
लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥ ६१ ॥

संतोषो दैववशाद्यद् लभ्यते तेन मनःसंतुष्टि । ०संतोषैर्विहिता वृत्तिर्येषाम् । लुब्धको व्याधः । धीवरो दाश. । पिशुन. खल. । निष्कारणं वैरिण निष्कारणवैरिण । यथासंख्यालङ्कार ।

अथ सुजनपद्धति —

तत्रादावादरात्सुजनान्नमस्करोति—

वाञ्छा सज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् ।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले
एते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नम ॥६२॥

सज्जनसंगमे तस्य सर्वश्रेयोहेतुत्वादिति भाव. । तदुक्त—अघौघं प्राचीनं प्रशमयति पुण्यं वितनुते प्रसूते सद्बुद्धिं नवनवकला: पल्लवयति । हरत्यज्ञानान्ध्यं दिशति च परब्रह्मपदवीं सता सङ्गः कल्पद्रुम इव न किं किं वितनुते ॥ कथिनाप्युक्तं सत्संगति. कथय किं नकरोति पुंसामिति । गुरौ तस्य पूज्यत्वात् । व्यसनमासक्ति. । लोकापवादात्—लोकापवादो बलवानिति सत्यवती श्रुतिः । इत्यादिवचनात् । खले-दुर्जनं दूरतस्त्यजेत् । दुर्जनः परिहर्तव्य. इत्यादिवचनजातात् । शार्दूल०वृत्तम् ॥

अथ महात्मनां निसर्गसिद्धगुणान् वर्णयति—

विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरतिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ६३ ॥

धैर्यं 'मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु' इत्युक्तलक्षणम् । वाक्पटुता वाक्चातुर्यम् । इदं-नपुंसकमनपुंसकेन इत्यादिना नपुंसकैकशेषः । महात्मनां महानुभावानाम् । प्रकृत्या स्वभावत. सिद्धम् । द्रुतविलम्बितं वृत्तम् ॥

---

१ संगतौ. २ गुणिगणे. ३ चत्रिणि. ४ यत्र. ५ हेत्वेव शोकस्थिरि ; सैवं मूर्धस्थिता. ६ चाभिरुचिः. ७ श्रुते

अथैषामन्यदु साध्यं सदाचारप्रकारमाह—

प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधि
प्रियं कृत्वा मौनं सदसि कथनं नाप्युपकृतेः ।
अनुत्सेको लक्ष्म्यां निरभिभवसारा परकथा·
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ६४ ॥

प्रच्छन्नं न तु प्रकाशम् । सभ्रमस्यादरस्य विधि विधानम् । सभ्रम· साध्वसेपि स्यात्सवेगादरयोरपि । इति मेदिनी । यद्वा सभ्रमेण त्वरया अभ्युत्थानाभिवादनादिकातिथ्यक्रिया । कथनं न । न दत्वापरिकीर्तयेदिति मनुस्मरणादिति भाव । उपकृते परोपकारस्य । कथन चापीति पाठे परैर्योपकृतिस्तस्या इत्यर्थ. । अनुत्सेको गर्वराहित्यम् । विनयवृत्तिरित्यर्थ । निर्गतोभिभवः तिरस्क्रिया यस्मात्तादृशा. सार. यासां यासु वा ता । समुच्चयालकार । शिखरिणी वृत्तम् ॥

अथ महात्मनां प्रसिद्धविलक्षणां मण्डनसामग्रीमाह—

करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता
मुखे सत्या वाणी विजयिभुजयोर्वीर्यमतुलम् ।
हृदि स्वच्छा वृत्तिः श्रुतमधिगतं च श्रवणयो-
र्विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥ ६५ ॥

श्लाघ्य. प्रशस्तः । गुरुपादयो प्रणयिता नम्रता । सादरं नमस्कृतिरित्यर्थ । विजयेते इति तच्छीलौ भुजौ तयोरतुलं निरुपमं वीर्यम् । विजयि जयनशीलमिति पृथग्वा पदं वीर्यविशेषणम् । स्वच्छा निर्मला निष्पापेति यावत् । अधिगतं श्रुतं शास्त्रम् । विनापि असत्यप्यैश्वर्ये । शिखरिणी वृत्तम् ॥

अथ संपदापदो सुजनानां मनोवृत्तिं वर्णयति—

संपत्सु महतां चित्तं भवत्युत्पलकोमलम् ॥
आपत्सु च महाशैलशिलासंघातकर्कशम् ॥ ६६ ॥

उत्पलवत्कोमलम् । महांश्चासौ शैलश्च तस्य शिलानां सघातस्तद्वत्कर्कशं कठिनम् । शैलशिलावद्धैर्यौघ्यमनेनाभेद्यमित्यर्थं । उपमालंकार ।

---

१ चाप्युपकृते·. २ लक्ष्म्यां ३ पौरुषमहो ४ स्वच्छा.

अथाधममध्यमोत्तमगुणावाप्तिप्रकारमाह—

संतप्तायसि संस्थितस्य पयसो नामापि न श्रूयते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वात्यां सागरशुक्तिमध्यपतितं सन्मौक्तिकं जायते
प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ॥ ६७ ॥

संतप्तं च तदयो लोहं तस्मिन् । नामापि न ज्ञायते अत्यन्तध्वस्तत्वात् । सागरे या शुक्तयस्तासां मध्ये पतितम् । मौक्तिकं–मुक्तैव मौक्तिकम् । विनयादित्वात्स्वार्थे ठक् । अधमश्च मध्यमश्च उत्तमश्च तादृशो गुणो यस्य सः । पाठान्तरे निकृष्टसाधारणोत्कृष्टाश्रयिणा वृत्तयो व्यापारा एवंविधा नामाश्रवणादिरूपा भवन्ति । अतो नीचाश्रयो न कर्तव्यः कर्तव्यो महदाश्रयः । इति भावः । शार्दूल॰ वृत्तम् ॥

अथ पुण्यकृदेव लभते सत्पुत्रादिकमित्याह तल्लक्षणपूर्वम्—

प्रीणाति यः सुचरितैः पितरं स पुत्रो
यद्भर्तुरेव हितमिच्छति तत्कलत्रम् ।
तन्मित्रमापदि सुखे च समक्रियं य-
देतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ ६८ ॥

सुचरितैः सत्कृत्यैः । ऐहिकपरमार्थसाधनभूतैरिति यावत् । तदुक्तम्–जीवतो॰ वाक्यकरणात्प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानेन त्रिभिः पुत्रस्य पुत्रता ॥ इति । यद्भर्तुर्हितमेवेच्छति तदित्यन्वयः । यद्वा यद्भर्तुर्हितमिच्छति तदेव कलत्रमिति योज्यम् । पतिभक्तिपरा साध्वी शान्ता सानतिभाषिणी । इति पतिमताधर्मत्वात् । समा क्रिया यस्य तत् । वसन्ततिलका वृत्तम् ॥

अथ सतामसाधारणमहिमातिशयेनाशेषजनवन्दनीयत्वमाह—

नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान्गुणान्ख्यापयन्तः
स्वार्थान्संपादयन्तो विततपृथुतरारम्भयत्नाः परार्थे ।
क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान्दुर्मुखान्दूषयन्तः
सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्चनीयाः ॥ ६९ ॥

१ ज्ञायते. २ दृश्यते ३ अन्त सा॰ ४ कुक्षि॰, ५ सन्मौ॰ ६ चमजुषामेवंविधा वृत्तय . ७ सवासुत॰ ८ यः प्रीणयेत्, ९ यदेकरूपम्. १० पृथुमहा, बहुतर. ११ दूषयन्तः समन्तात्, दुर्जनान्दुःखयन्तः.

उन्नमन्त. उन्नतिं प्राप्नुवन्त. । परेषां गुणास्तेषां कथनैर्वर्णनै । ख्यापयन्त. प्रकटयन्तः । न त्वात्मश्लाघया । अतिशयेन पृथव पृथुतरा । आरभ्यन्ते इति आरम्भा कार्याणि। पृथुतराश्च ते आरम्भाश्च पृथु०म्भा । वितत पृथुतरारम्भेषु यत्नो यैर्येषा वा ते तथा । वितती पृथुतरावारम्भयत्नौ येषां ते इति केचित् । आक्षेपस्य निन्दाया आक्षेपेण वा यानि रूक्षाण्यक्षराणि तैर्मुखराणि वाचालानि मुखानि येषा तान्। आश्चर्येण सहिता साश्चर्या चर्या आचरण येषा ते । नाभ्यर्चनीया इति काकु । सर्वेषामेव पूजनीया इत्यर्थ । स्रग्धरा वृत्तम् ॥

अथ परोपकारपद्धति —

अथ क्रमप्राप्तां परोपकारपद्धतिं वर्णयति—

भवन्ति नम्रास्तरव. फलोद्गमै-
नवाम्बुभिर्भूरिविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभि-
स्स्वभाव एवैष परोपकारिणाम् ॥ ७० ॥

फलोद्गमैरुत्पन्नफलभारै । नम्रा अवनता । तदुक्त-परोपकाराय फलन्ति वृक्षा । इति। नवानि च तान्यम्बूनि तै । भूरिविलम्बिना दूरावलम्बिन । अनुद्धता विनयवन्तः । प्रातवस्तुमालकारार्थान्तरन्यासश्च । वशस्थ वृत्तम् ॥

अथैतेषां प्रधानमण्डनसम्पत्तिमाह—

श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन
विभाति काय. करुणापराणां परोपकारैर्न तु चन्दनेन ॥ ७१ ॥

श्रुत वेदधर्मशास्त्रादिश्रवण । कुण्डल सुवर्णरत्नमय कर्णभूषण तेन । परिसख्यालकार । उपजातिश्छन्द ।

अथ सन्मित्रलक्षणमाह—

पापान्निवारयति योजयते हिताय
गुह्यं च गूहति गुणान्प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्त ॥ ७२ ॥

पापाद्दुष्कर्मप्रवृत्तेर्निवारयति धर्माचरणोपदेशनेति शेष । वारणार्थानामीप्सित. ।

१ ०भूमि, दूर १ अनर्थिता०, १ कुलानाम्.

(१. ४. २७) इति पञ्चमी । हिताय सत्कर्माचरणाय प्रवर्तयति । गुह्यं गोप्यम् । आपदं गत आपद्गतस्तम् । वसन्ततिलका वृत्तम् ॥

अधुना सतां स्वभावत एव परहिते प्रवृत्तिरित्याह—

पद्माकरं दिनकरो विकचीकरोति
चन्द्रो विकाशयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहितेषु कृताभियोगाः ॥ ७३ ॥

दिनं दिवसं करोतीति दिनकरः सूर्यः । कृञो हेतुताच्छील्यानुलोम्येषु (३. २. २०) इति टप्रत्ययः । न अभ्यर्थितो याचितः अनभ्यर्थितः । सन्नपि । पद्मानामाकरः पद्मसमूहस्तम् । विकचं प्रफुल्लं करोति । प्रफुल्लोत्फुल्लसंफुल्लव्याकोचविकचस्फुटाः । इत्यमरः । कैरवचक्रवालं कुमुदखण्डम् । सिते कुमुदकैरवौ इत्यमरः । विदितं । अभितो योगः अभियोगः उत्साहपूर्वको यत्नः यैस्ते । अर्थान्तरन्यासालं० । वसन्त० वृत्तम् ॥

अथ पुरुषाणामुत्तमादिप्रकारमाह—

एते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
तेऽमी मानवराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ ७४ ॥

परेषामर्थः प्रयोजनं तद्घटनशीलाः । अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु । इत्यमरः । ये परार्थं परकार्यनिर्वाहार्थमुद्यमन उद्योगभाजः । ते मध्यमा इत्यर्थः । मानवा राक्षसा इव मानवराक्षसाः । तद्वत्क्रूराचारा इत्यर्थः । निरर्थकं प्रयोजनमन्तरेणैव । शार्दूल० वृत्तम् ॥

अथ नीरक्षीरदृष्टान्तेन सन्मैत्रीं वर्णयति—

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरे तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः ।

---

१ पि जलद सलिलं २ पराहते मुक्तनियोगाः. ३ एकः ४ स्वार्थान्. ५ मानुष ६ सकला दत्ता निजा ये गुणाः ७ दृष्ट्वोत्तापं ८ ज्ञात्मा.

गन्तुं पावकमुन्मनस्तदभवद् दृष्ट्वा तु मित्रापदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥७५॥

आत्मानं गतमात्मगतं यदुदकं तस्मै । गुणा माधुर्यधावल्यादयः । उद्गतं मनो यस्य तदुन्मनः उत्सुकमित्यर्थः । उन्क उन्मना इति निपातनात्साधु । ईदृशी अन्योन्यव्यसनासहनशीलेत्यर्थः । अत्र स्वभावसिद्धस्य क्षीरनीरव्यवहारस्य परस्परसंतापदर्शनहेतुकत्वेनोत्प्रेक्षणात्क्रियानिमित्तक्रियास्वरूपोत्प्रेक्षा । सा चोक्तार्थान्तरन्यासनिर्व्यूढेत्यनयोर्विजातीयसंकरः । इति रामचन्द्रबुधेन्द्रः । शार्दूल० वृत्तम् ॥

इत स्वपिति केशवः कुलमितस्तदीयद्विषा-
मितश्च शरणार्थिनः शिखरिणां गणाः शेरते ।
इतोपि वडवानलः सह समस्तसंवर्तकै-
रहो विततमूर्जितं भरसहं च सिन्धोर्वपुः * ॥ ७६ ॥

इत एकस्मिन्प्रदेशे इत्यर्थः । स्वपितीति योगानुसंधानपरः शेते । रुदादिभ्यः सार्वधातुके ( ७-२-७६ ) इतीडागमः । तस्य केशवस्येमे तदीयाः । त्यदादित्वाद्वृद्धाच्छः । तदीया द्विषो राक्षसाः तेषाम् । इतोन्यस्मिन्प्रदेशे । वडवानलो वाडवाग्निः । और्वस्तु वाडवो वडवानलः इत्यमरः । संवर्तकाः प्रलयकालवर्षिणो मेघविशेषास्तैः सह । अहो इत्याश्चर्ये । केशवशयनाधारतया विततं विस्तृतं वडवानलाश्रयमपि वर्धिष्णुतयोर्जितं पर्वतभारोद्वहनाद्भरसहं च । अतोऽप्रमेयानुभावत्तया विस्मयावहमित्यर्थः । पृथ्वी वृत्तम् ॥

अथ सतां चेष्टितं वर्णयन् सदाचारं प्रदर्शयति—

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम् ।
मान्यान्मानय विद्विषोप्यनुनय प्रच्छादय स्वान्गुणा-
न्कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां लक्षणम् ॥७७॥

छिन्धि वैराग्यशस्त्रेणेति भावः । सति क्रोधादिकारणे चित्तस्य निराकुलत्वं क्षमा ताम् । सेवस्व बुद्धिविकासार्थमिति भावः । तदुक्तं-यस्तु पर्यटते देशान्यस्तु सेवेत पण्डितान् । तस्य विस्तारिता बुद्धिस्तैलबिन्दुरिवाम्भसि ॥ मान्यान्पूज्या-

१ खिनाम्, २ भिन्नमुच्छिन्नन् *अम्मतटे जात कूपे स एक- इत्यादि पद्यद्वयं केषुचित्पुस्तकेषु प्रक्षिप्तं दृश्यते । ३ प्रच्छादय प्रथयन्. ४ चेष्टितम्

नमानय पूजय । अन्यथा महती हानिः स्यात् । उक्तं च । अपूज्या यत्र पूज्यन्ते पूज्याश्चैवावमानिताः । अयशो महदाप्नोति धनाद्धर्माच्च हीयते ॥ प्रख्यापय प्रश्रयमितिपाठे गुर्वादिषु नम्रत्वं प्रकटयेत्यर्थः । दुःखमस्य संजातमसौ दुःखितस्तस्मिन् । तारकादित्वादितच् । शार्दूल० वृत्तम् ॥

एवंविधाः सन्तो विरला इति निगमयति—

मनसि वचसि काये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणून्पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ ७८ ॥

पुण्यमेव पीयूषममृतं तेन पूर्णाः । पुण्यकर्माचरणनिरता इत्यर्थः । पीयूषममृतं सुधा । इत्यमरः । त्रयाणां भुवनानां समाहारः त्रिभुवनं लक्षणया तन्निवासिजनस्तम् । उपकारपरम्पराभिः संतोषयन्तः । परेषां गुणपरमाणूनल्पगुणानित्यर्थः । न पर्वता अपर्वताः । अपर्वताः पर्वताः सम्पद्यन्ते तथा कृत्वा पर्वतीकृत्य । अभूततद्भावे च्विः । ऊर्यादिच्विडाचश्च ( १-४-६१ ) इति गतिसंज्ञायां कुगतिप्रादय इति समासः । विकसन्तः सन्तुष्यन्तः । कियन्तः कतिपये । विरला एवेत्यर्थः । मालिनी वृत्तम् ॥

अथ मलयवर्णनेन महान्तः प्राकृतमप्युन्नतं पदं प्रापयन्तीत्याह—

किं तेन हेमगिरिणा रजताद्रिणा वा
यत्राश्रिताश्च तरवस्तरवस्त एव ।
मन्यामहे मलयमेव यदाश्रयेण
कङ्कोलनिम्बकुटजा अपि चन्दनानि ॥ ७९ ॥

हेमगिरिर्मेरुस्तेन । रजताद्रिणा कैलासेन । वसन्ततिलका वृत्तम् ॥

रत्नैर्महार्हैस्तुतुषुर्न देवा
न भेजिरे भीमविषेण भीतिम् ।
सुधां विना न प्रययुर्विरामं
न निश्चितार्थाद्विरमन्ति धीराः ॥ ८० ॥

---

१ पूरयन्तः. २ कुटजान्यपि ३ महार्घैः.

अथ धैर्यं वहति—

रत्नैः कौस्तुभादिभिः । यद्वा जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते । इति वचनादैरावतोच्चैःश्रव कल्पवृक्षादिभिः श्रेष्ठवस्तुभिः । तुतुषुः । मन्थनसमये इति शेषः । भीमविषेण कालकूटाख्येन । विरामं मथनादिति शेषः । निश्चयार्थोऽत्प्रतिज्ञातार्थात् । न विरमन्ति इष्टफलप्राप्तिं यावत्प्रयतन्ते इत्यर्थः । जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् । इति पञ्चमी । व्याङ्परिभ्यो रमः । इति परस्मैपदम् । अर्थान्तरन्यासोऽलङ्कारः । वृत्तमुपजातिः ॥

अथाध्यवसायपरः सुखदुःखे विगणय्य कार्यं साधयत्येवेत्याह—

> क्वचिद्भूमीशायी क्वचिदपि च पर्यङ्कशयनः
> क्वचिच्छाकाहारी क्वचिदपि च शाल्योदनरुचिः ।
> क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो
> मनस्वी कार्यार्थी गणयति न दुःखं न च सुखम् ॥ ८१ ॥

भूमौ शेते इति भूमीशायी । पर्यङ्के मञ्चे हंसतूलादितल्पयुक्ते शयनं यस्य तथा । शाकाहारी नीरसान्नसेवीत्यर्थः । शाल्योदने रुचिर्यस्य । मिष्टान्नभोजीत्यर्थः कन्था जीर्णवस्त्रखण्डनिर्मितं प्रावरणविशेषं धारयतीति तच्छीलः । सर्वत्र ताच्छील्ये णिनिः । दिव्यं च तदम्बरं च तस्य धरः । प्रशस्तं मनोऽस्यास्तीति मनस्वी धीरः । प्रशंसायां विनिः । कार्यार्थी कार्यमर्थयते तच्छीलः । यद्वा स्वकार्यसिद्ध्यभिलाषी । अर्थोऽस्यास्तीत्यर्थी । कार्येणार्थी कार्यार्थी । कृद्वृत्तेस्तद्धितवृत्तिर्बलीयसीति महाभाष्यात् । न गणयतीति—सुखदुःखे समे कृत्वा स्वकर्मसाधनतत्परो भवतीत्यर्थः । शिखरिणी वृत्तम् ॥

अथ शीलमेव प्रधानं भूषणमित्याह—

> ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
> ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।
> अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
> सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ ८२ ॥

वाक्संयमः न तु असम्बद्धप्रलापः । उपशमो विषयेच्छानिवृत्तिः शान्तिर्वा ।

---

१ पृथ्वीशय्यः ; भूमौ शायी-शय्या, भूमिः शय्या २ शयनम् ३ निर्मदता.

अक्रोध. समाहितचित्तत्वम् । प्रसज्यप्रतिषेधेपि नञ्समास क्वचिदिष्ट.। निर्व्याजता निष्कापट्यम् । शार्दूल० वृत्तम् ॥

धीरा न्यायमार्गात्कदापि न चलन्तीत्याह—

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ ८३ ॥

नीतौ नये निपुणा । न्याय्यान्न्यायादनपेतात् । धीराः धैर्यशालिनो मनस्विन. । वसन्ततिलका वृत्तम् ॥

अधुना धीरस्य धैर्यगुणो न कदाचिदपाक्रियते इति दृष्टान्तमाह—

कदर्थितस्यापि हि धैर्यवृत्तेः
न शक्यते धैर्यगुण. प्रमार्ष्टुम् ।
अधोमुखस्यापि कृतस्य वह्नेः
नाधः शिखा याति कदाचिदेव ॥ ८४ ॥

कुत्सितोर्थ कदर्थः । कोः कत्तत्पुरुषेऽचि । इति कुशब्दस्य कदादेशः । कदर्थीकृतः कदर्थितो न्यक्कृतस्तस्य । धैर्येण वृत्तिर्यस्य तस्य । धैर्यमेवगुण धैर्यगुण. प्रमार्ष्टुं निराकर्तुं न शक्यते । तत्र दृष्टान्त अधोमुखस्येति । वृत्तमुपजाति. ॥

संप्रति को धीर इत्याकांक्षायामाह—

कान्ताकटाक्षविशिखा न लुनन्ति यस्य
चित्तं न निर्दहति कोपकृशानुतापः ।
कर्षन्ति भूरिविषयाश्च न लोभपाशै-
र्लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥ ८५ ॥

यस्य चित्तं कान्तायाः कटाक्षा अपाङ्गवीक्षितानि एव विशिखा बाणा न लुनन्ति । भिन्दन्तीत्यर्थ । कोप एव कृशानुरग्निस्तस्य ताप न निर्दहति । भूरयो विषया लोभा एव पाशास्तैः न कर्षन्ति स्वायत्तं कुर्वन्तीत्यर्थः । जयति स्वाधीनतां नयति । वसन्ततिलका वृत्तम् ॥

---

१ इदेशिनाशो न हि शक्नीय.. २ तनूनपातः. ३ खनन्ति. ४ दर्पन्ति.

पातितोपि कराघातैरुत्पतत्येव कन्दुकः ।
प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥ ८६ ॥

साधु वृत्तं येषां तेषां सदाचरणानां धैर्यशालिनाम् । अस्थायिन्यः न तिष्ठन्ति तच्छीलाः ॥

वरं मरणं न तु शीलहानिरित्याह—

वरं तुङ्गाच्छृङ्गाद्गुरुशिखरिणः क्वापि विषमे
पतित्वायं कायः कठिनदृषदन्तर्विदलितः ।
वरं न्यस्तो हस्तः फणिपतिमुखे तीव्रदशने
वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥ ८७ ॥

गुरोर्बृहतः शिखरिणः पर्वतस्य तुङ्गादुन्नतात् शृङ्गात् शिखरात्क्वापि विषमे विकटे पतित्वा कठिनाश्च ता दृषदश्च तासामन्तर्विदलितः शीर्णो वरम् । तथा च तीव्रा विषानलोग्रा दशना यस्य तस्मिन् । शीलविलयः सद्वृत्तभ्रंशो न वरमीषदपि प्रियः । देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये । इत्यमरः । अतः शीलं प्राणान्तेपि न त्याज्यमिति भावः । शिखरिणी वृत्तम् ॥

ननु एवं शीलरक्षणे को लाभ इत्याकाङ्क्षायामाह—

वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणा-
न्मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते ।
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते
यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ ८८ ॥

यस्य पुरुषश्रेष्ठस्याङ्गे अखिललोकानां वल्लभतममिष्टतमं शीलं समुन्मीलति तस्य । वह्निः दाहशीलोपि जलायते जलवदाचरति । शीतो भवतीत्यर्थः । कर्तुः क्यङ् सलोपश्च ( ३-१-११ ) इत्याचारार्थे क्यङ् । अकृत्सार्वधातुकयो-रिति दीर्घः । एवं सर्वत्र । जलनिधिर्दुस्तरोपि अल्पनदीवद्भवति । कुल्याल्पा कृत्रिमा सरित् इत्यमरः । मेरुर्दुरारोहोपि । व्यालः सर्पस्तीव्रविषभीषणोपि । माल्यगुणः पुष्पस्रक् । स इवाचरति । पीयूषस्यामृतस्य वर्षो वर्षणं तद्वदाचरति । अत्र क्रमशोऽस्वीरम्यप्रतीतेरुपमालंकारः । शार्दूलवि॰ वृत्तम् ॥

१ दि मुरधानाम्. २ शृङ्गोत्संगात् ३ मुनिने. ४ दन्ते. ५ तीव्र ६ कृशायते.

धीराणां न कदाचिदपि संतापो जायते इत्याह—

छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः ।
इति विमृशन्तः सन्तः संतप्यन्ते न विप्लुता लोके ॥ ८९ ॥*

क्षीणः कृष्णपक्षे क्रमशः कलाहानेऽपि उपचीयते वर्धते । लोके इति विमृशन्तो विचारयन्तः सन्तः विप्लुता आपदभिभूता अपि । आर्या छन्दः ।

अथ दैवपद्धति —

नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावतो वारणः ।
इत्यैश्वर्यबलान्वितोऽपि बलभिद्भग्नः परैः संगरे
तद्व्यक्तं ननु दैवमेव शरणं धिग्धिग्वृथा पौरुषम् ॥ ९० ॥

बृहतां वाचां पतिः बृहस्पतिः । ( श्लो. ३४ द्रष्टव्य । ) । हरेः सर्वदेवाधीशस्य । न तु कस्यचित्क्षुद्रदेवस्य । बलभिदिन्द्रः । भग्नः पराजितः । तत्तस्मात् । पौरुषं पुरुषस्य कर्म । हायनान्तयुवादिभ्योऽण् इत्यण् । पुरस्कारं धिग्धिक् । नित्यवीप्सयोरित्याभीक्ष्ण्ये द्विरुक्तिः । यतः वृथा व्यर्थं तत् । शार्दूलवि० वृत्तम् ॥

अधुना नराणां वृद्धिक्षययोर्दैवमेव कारणमित्याह—

भग्नाशस्य करण्डपीडिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
लोकाः पश्यत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ॥ ९१ ॥

नक्तं रात्रौ आखुर्मूषकः विवरं बिलं । करण्डे इत्यर्थः । कृत्वा । भग्ना मुक्तिं प्रति आशा यस्य तस्य । करण्डे पीडिता प्रसरणाभावात्तनुर्यस्य । क्षुधा बुभुक्षया म्लानानि इन्द्रियाणि यस्य । तस्य भोगिनः सर्पस्य मुखे पतितः । असौ सर्पस्तस्याखोः पिशितेन मांसेन तृप्तस्तेनैव पथा बिलद्वारेण । पश्यतेति—अतो हानौ वृद्धौ वा शोक आनन्दो वा न कार्य इत्यर्थः । शार्दूल० वृत्तम् ॥

एवं सत्यपि धीमतोद्योगः कर्तव्य एवेत्याह—

कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी ।
तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ ९२ ॥

१ चन्द्रः क्षीणोऽपि वर्धते पुनः. २ ते विपदा. ३ विप्लु. ४ मघवा. ५ वरमेव दैवम्० ६ पिण्डितं ७ स्वस्थाखिलः. ८ पर्दं. * अस्मात्परमयं श्लोकः पुस्तकान्तरे—
अपेक्षन्ते न पात्राणि न स्नेहं न दशान्तरम् । सदालोकहिता रम्याः रत्नदीपा इवोत्तमाः ॥

कर्मायत्तं कर्माधीनम् । अधीनो निघ्न आयत्त इत्यमरः । सुविचार्य कुर्वता उद्योगपरेणैव भाव्यम् । अनुष्टुप् छन्दः ॥

दुर्भाग्यस्य न क्वापि सुखप्राप्तिरित्याह ॥

खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके
वाञ्छन्देशमनातपं विधिवशात्तालस्य मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥९३॥

खल्वाटो लूनलोमशिरस्कः । दिवसेश्वरस्य सूर्यस्य । अनातपं सच्छायम् । विधिवशात् दुर्दैवात् । सशब्दं शब्देन सहितं यथा तथा भग्नम् । शार्दूल० वृत्तम् ॥

अतो दैवमेव बलवदिति मम मतिरित्याह—

शशिदिवाकरयोर्ग्रहपीडनं
गजभुजंगमयोरपि बन्धनम् ।
मतिमतां च विलोक्य दरिद्रतां
विधिरहो बलवानिति मे मतिः ॥ ९४ ॥

ग्रहेण राहुणा । मतिमतां प्रशस्तबुद्धिमताम् । द्रुतविलम्बितं वृत्तम् ॥

विधिरपि कदाचिन्न सम्यक् चेष्टत इत्याह—

सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः ।
तदपि तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः ॥९५॥

नास्ति शेषो येषां ते अशेषाः । अशेषाश्च ते गुणास्तेषामाकरम् । पुरुषरत्नं नरश्रेष्ठं सृजति तावन्निर्माति खलु । तत्क्षणभङ्गि तत्क्षणविनाशि । अपण्डितता मौढ्यम् । वृत्तं द्रुतवि० ॥

दैवयोगो न केनापि लङ्घनीय इत्याह—

अयममृतनिधानं नायकोऽप्योषधीनां
शतभिषगनुयातः शम्भुमूर्धावतंसः ।
विरहयति न चैनं राजयक्ष्मा शशाङ्कं
हतविधिपरिपाकः केन वा लङ्घनीयः ॥ ९६ ॥

---

१ ०पितो मस्तके २ दूरगति ३ प्राशु ४ दैवहतक.. ५ तत्रापदां भाजनम् ६ भुजंगविहगमब० शशि० इति पादयोर्व्यत्यासेन पाठः ।

अथ दृश्यमानः चन्द्रः। अमृतस्य निधानं निधिरपि। ओषधीनां संजीवन्यादीनां नायकोऽपि। शतभिषक् शततारकानक्षत्रपुरःसरेण। पक्षे शतं भिषजो वैद्यास्तैः। न केवलमेतत्—शम्भोः सर्वलोकसुखकरस्य शंकरस्य मूर्ध्नः अवतंसः शिरोभूषणम्। राजा चासौ यक्ष्मा च। अत्र वाग्भट—अनेकरोगानुगतो बहुरोगपुरोगमः। राजयक्ष्मा क्षयोऽशेषरोगराडिति च स्मृतः॥ न विरहयति न त्यजति। हतविधिः दैवहतकस्य। केन वा लंघनीयो न केनापीत्यर्थः। मालिनी वृत्तम्॥

अथ सर्वत्र लाभालाभयोः दैवमेव प्रमाणमित्याह—

दैवेन प्रभुणा स्वयं जगति यद्यस्य प्रमाणीकृतं
तत्तस्योपनमेन्मनागपि महान्नैवाश्रयः कारणम्।
सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं
सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोविन्दवः॥९७॥

प्रभुणा समर्थेन। यस्य प्रमाणीकृतं भाग्येन निर्दिष्टं तत्तस्योपनमेत्। महानाश्रयो मनागपि नैव कारणम्। अत्र दृष्टान्तः—सर्वेषामाशा मनोरथास्तासां परिपूरके। यद्वा सर्वाश्च ता आशा दिशश्च तासां पूरके सकलदिग्देशव्यापके। मेघे अहन्यहनि प्रत्यहं। अव्ययं विभक्ति-इत्यादिनाव्ययीभावः। नपुंसकादन्यतरस्यामिति समासान्तः। वर्षत्यपि सूक्ष्मा अल्पाः। द्वौ वा त्रयो वा द्वित्राः। संख्ययाव्ययासन्न इत्यादिना बहुव्रीहिः। बहुव्रीहौ संख्येये डज्बहुगणादिति डच्प्रत्ययः। शार्दूलवि० वृत्तम्॥

न कोऽपि विधिनियोगमन्यथा कर्तुं समर्थ इत्याह—

पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं
नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणं।
धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं
यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः॥९८॥

करीरो वृक्षविशेषः। उलूकोऽपि घूकश्च। नावलोकते पदार्थान्पश्यति। स्पष्टमन्यद्। शार्दूल० वृत्तम्॥

---

१ वर्षत्यपि

अथ कर्मपद्धतिः—

अथ दैवपद्धतेरनन्तरं दैवस्यापि कर्माधीनत्वात्कर्मपद्धतिं निरूपयति । तत्रादौ कर्मणो बलीयस्त्वं वर्णयति—

नमस्यामो देवान्ननु हतविधेस्तेपि वशगा
विधिर्वन्द्यः सोपि प्रतिनियतकर्मैकफलदः ।
फलं कर्मायत्तं किममरगणैः किं च विधिना
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ ९९ ॥

देवाः स्वर्गमर्त्या इतीन्द्रादीन्नमस्यामोऽभिवादयामहे चेत् । ननु तेपि विधि-हतकस्य वशं गच्छन्तीति वशगाः तदधीना इत्यर्थः । एवं चेद्विधिर्वन्द्योऽस्तु । नैवमपि यतः सोपि प्रतिनियतं यत्कर्मफलं तदेवैकं ददातीति तथा । स्वात-न्त्र्येण फलदानेऽसमर्थ इत्यर्थः । एवं फलं कर्मायत्तं चेत् देवगणैः किमित्यादि । न किमपीत्यर्थः । तत्तस्मात् । न प्रभवति प्रबलो भवति । अत्र पूर्वपूर्वस्योत्तरो-त्तरं प्रत्युत्कर्षहेतुत्वान्मालादीपकमलंकारः । शिखरिणी वृत्तम् ॥

अथ कर्मणां सकलनियन्तृत्वं विशिनष्टि—

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासंकटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥१००॥

येन ब्रह्मा ब्रह्माण्डमेव भाण्डं तस्योदरे । कुलालेन तुल्यं कुलालवन्नियमितः सृष्टिनिर्माणकर्मणीत्यर्थः । येन विष्णुः महान्ति संकटानि यस्मिंस्तादृशे । दश अवतारा एव गहनं तत्र । यद्वा दशभिरवतारैर्गहनं यन्महासंकटं तस्मिन् । क्षिप्तः । येन रुद्रः कपालेन युक्तं पाणिपुटकं यद्वा कपालं ब्रह्मशिर एव पाणि-पुटकं तस्मिन् । या भिक्षा तदर्थमटनम् । स्पष्टमन्यत् । शार्दूलवि० वृत्तम् ॥

पूर्वजन्मनि कृतमवदातं कर्मैव फलदमित्याह—

नैवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसा खलु संचितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ १०१ ॥

---

१ पाठ किममरै: । २ सेवे

आकृतिः शरीरसौष्ठवम् । फलति इष्टफलं ददाति । यत्नेन कृता यत्नकृता । पूर्वमाचरितं यत्तपो तेन । काले तत्तत्कर्मपरिपाकसमये । वृक्षा यथा वृक्षा इव । वसन्ततिलका वृत्तम् ॥

महासंकटपतितस्यापि पूर्वपुण्यमेव शरणं भवतीत्याह—

**वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा**
**सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुरा कृतानि ॥१०२॥**

शत्रवश्च जलं च अग्निश्च तेषां मध्ये । विषमे निम्नोन्नतभूमिभागे संकटे वा स्थितम् । वृत्तमुपजातिः ॥

अधुना सर्वश्रेयोहेतुत्वात्सर्वैकया भगवतीं सत्क्रियामेवाराधयेत्युपदिशति—

**या साधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः**
**प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् ।**
**तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं**
**हे साधो व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः ॥१०३॥**

या सत्क्रिया खलान्साधून्करोति । मूर्खान् विदुषः प्राज्ञान् । द्वेषिणः शत्रून् हितान् करोति । परोक्षमतीन्द्रियमपि वस्तु प्रत्यक्षमिन्द्रियगोचरं करोतीति योज्यम् । हे साधो तां भगवतीं सर्वसमर्थां सत्क्रियामाराधय । विपुलेषु गुणेषु व्यसनैरभिनिवेशेनास्थां फलप्राप्तेः मा कुरु । व्यसनैर्विपुलेष्वापद्व्यापिषु गुणेषु इति केचित् । शार्दूलवि० वृत्तम् ॥

संपदापदौ शुभाशुभकर्मायत्ते इत्याह—

**शुभ्रं सद्म सविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला**
**लक्ष्मीरित्यनुभूयते चिरमनुस्यूते शुभे कर्मणि ।**
**विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तुकं**
**मुक्ताजालमिव प्रयाति झटिति भ्रश्यद्दिशो दृश्यताम् ॥१०४॥**

शुभे कर्मणि चिरमनुस्यूते संलग्ने । षिवु तन्तुसंताने इति धातोः कर्तरि क्तः । च्छ्वोः शूडनुनासिके च इत्यूठ् यणादेशः । शुभ्रं सद्म सुधालिप्तहर्म्यादि । विभ्रमेण सहिताः सविभ्रमाः सविलासाः । श्वेतं च तदातपत्रं च तेनोज्ज्वला लक्ष्मीः । इत्येतत्सर्वमनुभूयते । शुभकर्मणि विच्छिन्ने फलदानेनावसन्ने सर्वमेतत् । अनङ्ग-

१ रिथगमिव रक्तेन

कलहो रतिरणं स एव क्रीडा तस्यां त्रुटन्तस्तन्तवो यस्य तन्मुक्ताजालं मौक्तिकहार इव झटिति झाक् भ्रश्यद् गलन्नितरां दिशः प्रयाति । दृश्यतामवलोक्यताम् । यद्वा दिशः अदृश्यतामिति पदच्छेदः । दिशः अन्यदिक्षु गलदृश्यतां प्रयाति । केचिद्दिशोदृश्यतामित्येकं पदमिच्छन्ति । उपमालंकारः । शार्दूलवृत्तम् ॥

अतः कर्म कुर्वता नरेण परिणामं विचार्यैव तत्कर्तव्यमित्याह—

गुणवदगुणवद्वा कुर्वता कार्यमादौ
परिणतिरवधार्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ १०५ ॥

गुणवद्गुणयुक्तम् । आदौ कार्यारम्भे । परिणतिः अवधार्या परिपाकोऽनुसंधातव्यः । अन्यथा अतिरभसेनातित्वरया । अत्यन्तमविचारेणेत्यर्थः । कृतानां कर्मणाम् । गुणवतामपीति शेषः । विपाकः आविपत्तेर्मरणकालं यावत् । शल्येन बाणाग्रेण तुल्यः हृदयं दहतीति तच्छीलो मनःसंतापकारीत्यर्थः । भवति । अतः सुविचार्यैव कार्यमारब्धव्यमिति भावः । मालिनी वृत्तम् ॥

इमां कर्मभूमिं प्राप्य यः सत्कर्म नानुतिष्ठति स मन्दभाग्य एवेत्याह—

स्थाल्यां वैडूर्यमय्यां पचति तिलखलीं चान्दनैरिन्धनौघैः
सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कमूलस्य हेतोः ।
छित्त्वा कर्पूरखण्डान्वृतिमिह कुरुते कोद्रवाणां समन्ता-
त्प्राप्येमां कर्मभूमिं न चरति मनुजो यस्तपो मन्दभाग्यः ॥१०६॥

यः मन्दभाग्यो मनुजः इमां कर्मभूमिं कर्मानुष्ठानयोग्यं मर्त्यलोकं प्राप्य सर्वश्रेयोहेतु तपो न चरति सः । विदूरप्रभवतीति वैदूर्यं मणिविशेषः । वैदूर्यं बालवायजम् इत्यमरः । विदूराञ्ञ्यः ( ४ ३-८४ ) इति ञ्यप्रत्ययः । वैदूर्यं प्रचुरं वैदूर्यविकारो वा वैदूर्यमयी । प्राचुर्ये विकारार्थे वा मयट् । तस्यां स्थाल्यां तिलखलीं निस्तैलतिलपिण्डिकां पचति । अथवा अर्कमूलार्थं सुवर्णविकारैः सुवर्णनिर्मितैः लाङ्गलाग्रैः हलमुखैः । विलिखति कर्षति । कोद्रवाणां

१ सगुणमगुणं वा. २ जातम्. ३ वैदूर. ४ कणानुसर्व. ५ निम्बैश्चन्दनाद्यैः. ६ गुल्म

कोरदूषकाद्यधान्यविशेषाणां द्रविड इति भाषाया । समन्तात् । कोरदूषस्तु कोद्रव इत्यमरः । वृतिमावरणम् । असम्भवद्वस्तुसम्बन्धवाक्यार्थवृत्तिनिदर्शना-भेदोऽलंकारः । स्रग्धरावृत्तम् ॥

नरो यत्काथितप्रयत्नान्विदधातु कर्मवशाद्भाव्यमेव भवतीत्याह—

मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे
वाणिज्यं कृषिसेवनादि सकला विद्याः कलाः शिक्षताम् ।
आकाशं विपुलं प्रयातु खगवत्कृत्वा प्रयत्नं परं
नाभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ॥ १०७ ॥

आहवे युद्धे । वणिजः कर्म वाणिज्यं क्रयविक्रयादि । कलाश्चतुष्षष्टिः । विपुलं सुविस्तीर्णम् । इह भाग्यवशतः कर्मानुरोधादभाव्यमभावि न भवति । यदभावि न तद्भावि भावि चेन्न तदन्यथा इति न्यायात् । शार्दूलवि० वृत्तम् ॥

किं बहुना प्रकृष्टपुण्यवतः सर्वमेवानुकूलत्वेन परिणमतीति निगमयन्नुपसंहरति—

भीमं वनं भवति तस्य पुरं प्रधानं
सर्वो जनः सुजनतामुपयाति तस्य ।
कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा
यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ १०८ ॥

यस्य नरस्य विपुलं पूर्वजन्मनि कृतं पुण्यमस्ति तस्य भीमं घोरं वनं प्रधानं सर्वोपभोगक्षममित्यर्थः । पुरं भवति । कृत्स्ना सर्वा । सन्त उत्तमाश्च ते निधयश्च तैः रत्नैः मणिभिः उत्कृष्टवस्तुभिर्वा पूर्णा । अतः श्रेयोऽर्थिना विपुलपुण्यसंचयः कार्य इत्यर्थः । वसन्ततिलका वृत्तम् ॥

इति श्रीभर्तृहरिविरचितं नीतिशतकं संपूर्णम् ॥

---

१ सेवनं च २ दिशतु ३ भाग्य ४ स्वज ५ महायोगीश्वरम०.

## विविधविषयकाः श्लोकाः ।

आलस्यं हि मनुष्याणां शरीरस्थो महान्रिपुः ।
नास्त्युद्यमसमो बन्धुः कृत्वा यं नावसीदति ॥ १ ॥

उद्यमेन समः । अवसीदति नाशमेति ।

को लाभो गुणिसंगमः किमसुखं प्राज्ञेतरैः संगतिः
का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः ।
कः शूरो विजितेन्द्रियः प्रियतमा कानुव्रता किं धनं
विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥ २ ॥

गुणिपुरुषाणां संगमः । प्राज्ञेभ्य इतरैः मूर्खैरित्यर्थः । समयस्य यस्मिन्काले यद्यदवश्यं कर्तव्यं तस्य कालस्य च्युतिः अतिवाहनम् । विजितानि इन्द्रियाणि येन सः । इन्द्रियाणां दुर्जयत्वात् । भर्तुः अनुरोध एव व्रतं यस्याः सा अथवा पत्युः अनु अनुकूलं व्रतमाचरणं धर्मो वा यस्याः सा । अप्रवासगमनं प्रवासगमनाभावः । प्रवासस्य वियोगदुःखादिना क्लेशकरत्वात् । आज्ञा एव फलं यस्य । शार्दूलवि॰ वृत्तम् ॥

मालतीकुसुमस्येव द्वे गती स्तो मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ ३ ॥

मालत्याः जातिलतायाः कुसुमं पुष्पं तस्य इव । ( श्लो॰ ३३ द्रष्टव्यः । )

अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः ।
परपरिवादनिवृत्तैः क्वचित्क्वचिन्मण्डिता वसुधा ॥ ४ ॥

न प्रियाणि अप्रियाणि तानि च वचनानि तैः दरिद्राः हीनाः तैः । प्रियवचनैः आढ्याः पूर्णाः तैः । स्वदारैः परितुष्टाः तैः । परेषां परिवादः निन्दा तस्य सकाशात् निवृत्ताः तैः ॥

एकेनापि हि शूरेण पादाक्रान्तं महीतलम् ।
क्रियते भास्करेणेव स्फारस्फुरिततेजसा ॥ ५ ॥

स्वपादेन आक्रान्तम् । पक्षे पादैः किरणैः । स्फारं विस्तीर्णं स्फुरितं देदीप्यमानं तेजः पराक्रमः पक्षे दीप्तिर्यस्य तेन ॥

---

१ महारिपु , २ कुर्वाणं ३ महात्मनः, ४ स्फुरतकान्तितेजसा

लज्जागुणौघजननीं जननीमिव स्वा-
मत्यन्तशुद्धहृदयामनुवर्तमानाम् ।
तेजस्विनः सुखमसूनपि संत्यजन्ति
सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ ६ ॥

लज्जा एव गुणस्तस्यौघः सततप्रवाहः । अथवा लज्जादयो ये गुणास्तेषामोघः । यद्वा लज्जाया ये गुणाः । तस्य जननीम् । अत्यन्तं शुद्धं हृदयं यस्या यस्याश्च । अनुवर्तमाना पालयतानुबन्धिनी पुत्रहितपरायणा च । सत्यमेव व्रतं तदेव तस्मिन्वा व्यसनं येषा ते । सुखं सुखेन । वसन्ततिलका वृत्तम् ॥

अग्राह्यं हृदयं यथैव वदनं यद्दर्पणान्तर्गतं
भावः पर्वतसूक्ष्ममार्गविषमः स्त्रीणां न विज्ञायते ।
चित्तं पुष्करपत्रतोयतरलं विद्वद्भिराशंसितं
नारी नाम विषाङ्कुरैरिव लता दोषैः समं वर्धिता ॥ ७ ॥

दर्पणान्तर्गतमादर्शे प्रतिफलितं वदनं यथा अग्राह्यं तथा स्त्रीणां हृदयमग्राह्यं ज्ञातुमशक्यम् । तासां भावः हृद्गत आशयः । पर्वते यः सूक्ष्मः मार्गः तद्वत् विषमः कठिणो दुर्ग्राह्यो वा । पुष्करपत्रे यत्तोयं तद्वत्तरलं चञ्चलम् । नामेति प्राकाश्ये । नारीणां दोषा सहजा एवेति भावः ॥ शार्दूलवि० वृत्तम् ॥

अभिमुखनिहतस्य सतस्तिष्ठतु तावज्जयोथवा स्वर्गः ।
उभयबलसाधुवादः श्रवणसुखोसौ वनात्यर्थम् ॥ ८ ॥

युद्धे शत्रो अभिमुखे निहतस्य क्षतस्य । सतो वीरस्य । स्वर्गः—अत्र मनुः— आहवेषु मिथोन्योन्यं जिघांसन्तो महीक्षितः । युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥ इति । उभयपक्षे यद्बलं तस्य साधु साधु इति वादः ॥

इत्येतस्मिन्वा निरवधिचमत्कृत्यतिशये
वराहो वा राहुः प्रभवति चमत्कारविषयः ।
महीमेको मग्नां यदयमवहद्धन्त सलिले
शिरःशेषः शत्रुं निगिलति परः संत्यजति च ॥ ९ ॥

---

१ जननीमिव वर्तमानाम्, अनुवर्तमाना. २ सदर्पण

इयत्तादपरिमाणके । निर्गत अवधि यस्मात् स निरवधि स चासौ च रुकुतेरतिशयश्च तस्मिन् । प्रभवति प्रकर्षेण वर्तते । यद्यस्मात्कारणादयं वराह । परो राहु शिर शेषो यस्य स । काव्यलिङ्ग यथासंख्यश्चालङ्कारौ । शिखरिणी वृत्तम् ॥

उदन्वच्छन्ना भूः स च निधिरपां योजनशतं
सदा पान्थ पूषा गगनपरिमाणं कलयति ।
इति प्रायो भावा स्फुरदवधिमुद्रामुकुलिता
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ १० ॥

उदन्वता उदधिना छन्ना व्याप्ता । योजनानां शतम् । पन्थान नित्य गच्छतीति पान्थ । भ्रमन्नित्यर्थ । स्फुरन् योवधि स एव मुद्रा तया मुकुलिताः सङ्कुचिता । प्रज्ञाया उन्मेष । अविद्यमाना सीमा यस्य स । विजयते सर्वोत्कर्षेण वर्तते । व्यतिरेकालङ्कार । वृत्त पूर्वोक्तम् ॥

एको देव केशवो वा शिवो वा
एकं मित्रं भूपतिर्वा यतिर्वा ।
एको वास पत्तने वा वने वा
एका भार्या सुन्दरी वा दरी वा ॥ ११ ॥

एको देवोस्तु । स्पष्टमन्यत् । विकल्पालङ्कार । तदुक्तं–विरोधे तुल्यबलयोर्विकल्पालङ्कृतिर्मता ॥ इति । शालिनी छन्द ॥

कमठकुलाचलदिग्गजफणिपतिविधृतापि चलति वसुधेयम् ।
प्रतिपन्नममलमनसां न चलति पुंसां युगान्तेपि ॥ १२ ॥

कमठ आदिकूर्मश्च कुलाचला–महेन्द्रो मलय सह्य शुक्तिमानृक्षपर्वत. । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वता ॥ इत्युक्ताश्च दिग्गजाश्च फणिपतिश्च तैः विधृता । किंतु अमलमनसां विरत्पादिमलरहितत्वात् शुद्धान्त करणानाम् । प्रतिपन्नमङ्गीकृतम् । व्यतिरेकालंकार । वृत्तमार्या ॥

किं कूर्मस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
किंवा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चल ।

---

१ स्येन य .

किंत्वङ्गीकृतमुत्सृजन्स्वमनसा श्लाघ्यो जनो लज्जते
निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ १३ ॥

यदेष क्ष्मा पृथ्वीं न क्षिपति । प्रतिपन्नवस्तुषु अङ्गीकृतकार्येषु । निर्वाहः संपादनम् । गोत्रव्रतं कुलव्रतम् । अर्थान्तरन्यासः । शार्दूलवि॰ वृत्तम् ॥

को न याति वशं लोके मुखे पिण्डेन पूरितः
मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ १४ ॥

स्पष्टार्थोयम् ॥

क्षुद्राः सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः
स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः ।
दुष्पूरोदरपूरणाय पिबति स्रोतःपतिं वाडवो
जीमूतस्तु निदाघसंभृतजगत्संतापविच्छित्तये ॥ १५ ॥

स्वेषां भरणं स्वभ॰ तस्य व्यापारः स्वभरणव्यापारः । स एव स्वभरणव्यापारमात्रं तत्र उद्यताः । दुःखेन पूर्यते इति दुष्पूरं तस्य पूरणाय । स्रोतःपतिं सागरजलम् । जीमूतो मेघस्तु । निदाघेन उष्णोपगमेन संभृतः जनितः जगतः संतापस्तस्य विच्छित्तये निर्वाणाय । सागरजलं पिबति । शार्दूलवि॰ वृत्तम् ॥

दूरादर्थं घटयति नवं दूरतश्चापशब्दं
त्यक्त्वा भूयो भवति निरतः सत्सभारञ्जनेषु ।
मन्दं मन्दं रचयति पदं लोकचित्तानुवृत्त्या
कामं मन्त्री कविरिव सदा खेदभारैरमुक्तः ॥ १६ ॥

अर्थं द्रव्यजातं साध्यं वा पक्षे नवं चमत्कारजनकमर्थं वाक्यसंदर्भम् । अपशब्दं दुष्टभाषितम् । यद्वा चापशब्दं धनुषः टंकारम् । पक्षे अपशब्दं व्याकरणशुद्ध्यादिरहितं शब्दम् । त्यक्त्वा घटयतीति संबंधः । पदं तन्त्रव्यवहारं पक्षे सुप्तिङन्तलक्षणम् । उपमालंकारः । मन्दाक्रान्ता वृत्तम् ॥

परिचरितव्याः सन्तो यद्यपि कथयन्ति नो सदुपदेशम् ।
यास्तेषां स्वैरकथास्ता एव भवन्ति शास्त्राणि ॥ १७ ॥

सन्तो यद्यपि सदुपदेशं न कथयेयुस्तथापि सेव्याः । यद्यतस्तेषां स्वैरालापा एव शास्त्राणि सदसत्प्रवृत्तिकारीणि भवन्ति ॥

१ किंच, किंतु. २ इन्यादद ३ परमो नेकः.

प्राय कन्दुकपातेनोत्पतत्यार्य पतन्नपि ।
तथा त्वनार्यः पतति मृत्पिण्डपतन यथा ॥ १८ ॥

कन्दुकपातेन कन्दुकवत्पुनरपि उत्पतत्युन्नत पद प्राप्नोति ॥

यदि नाम दैवगत्या जगदसरोजं कदाचिदपि जातम् ।
अवकरनिकरं विकिरति तत्किं कृकवाकुरिव हस ॥ १९ ॥

यदि कदाचित्। असरोजमविद्यमानकमलम्। तत्तथापि हस कृकवाकु कुक्कुट इव अवकरनिकर धूल्यादिसमूहम्। आर्या वृत्तम् ॥

यन्नागा मदवारिभिन्नकरटास्तिष्ठन्ति निद्रालसा
द्वारे हेमविभूषणाश्च तुरगा वल्गन्ति यद्दर्पिताः ।
वीणावेणुमृदङ्गशङ्खपटहैः सुप्तस्तु यद्बोध्यते
तत्सर्वं सुरलोकदेवसदृशं धर्मस्य विस्फूर्जितम् ॥ २० ॥

यत् मदवारिणा भिन्नौ करटौ गण्डौ येषां तादृशा नागा गजा द्वारे निद्रालसा तिष्ठन्ति। यत् दर्पिता तुरगा द्वारे वल्गन्ति नृत्यन्ति। सुरलोके ये देवास्तेषां सुरलोकस्य देव इन्द्र तस्य वा सदृशम्। ऐश्वर्यमिति शेषः। विस्फूर्जितं विलसितम्। उदात्तालङ्कार। शार्दूलवि० वृत्तम् ॥

रक्तत्वं कमलानां सत्पुरुषाणां परोपकारित्वम् ।
असतां च निर्दयत्वं स्वभावसिद्धं त्रिषु त्रितयम् ॥ २१ ॥

असतां खलानाम्। त्रयोऽवयवा अस्य त्रितयम्। सङ्ख्याया अवयवे तयप्।

वचोहि सत्यं परमं विभूषणं
लज्जा (गजा-) ङ्गनायाः कृशता कटौ च ।
द्विजस्य विद्यैव पुनस्तथा क्षमा
शीलं हि सर्वस्य नरस्य भूषणम् ॥ २२ ॥

गजाङ्गनाया इति पाठे हस्तिनाह्वयायाःस्त्रियाः ।

प्रियसखि विपद्दण्डाघातप्रपातपरम्परा-
परिचयचले चिन्ताचक्रे निधाय विधिः खल ।
मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालव-
द्भ्रमयति मनो नो जानीमः किमत्र विधास्यति ॥२३॥

१ भिन्नगण्डकर०. २ सत्य ३ पदघात, प्रान्त, प्रपात-प्रघात. ४ परिचितचले.

हे प्रियसखि । खलो विधिः विपदेव दण्ड तस्याघाताः प्रपातास्तेषां परम्पराया परिचयेन चलतीति तत्तथोक्त तस्मिन् । चिन्तैव चक्रं चिन्ताचक्र तस्मिन् । मनो निधाय मृदमिव मृत्तिकामिव बलात्पिण्डीकृत्य प्रगल्भश्चासौ कुलालश्च तद्वत् चतुरकुम्भकारवत् भ्रमयति भ्रमणं कारयति । अत्र स विधि कि विधास्यति करिष्यतीति न जानीम । हरिणी वृत्तम् ॥

विरम विरसायासादस्माद्दुरध्यवसायतो
विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे ।
अयि जडमते कल्पापाये व्यपेतनिजक्रमाः
कुलशिखरिण क्षुद्रा नैते न वा जलराशय ॥२४॥

विरसात्फलाभावेनासुभग. आयास यस्मिन् । दुरध्यवसायत. दुर्व्यापारात् । यत एते महान्त व्यपेतनिजक्रमा त्यक्तनिजकार्यपरिपाटय अत एव क्षुद्राः कुलशिखरिण इत्यादि । कुलशिखरिवत् जलराशिवद्वा निजं महिमानं न जहत्येवेत्यर्थ । व्यतिरेकालकार । शिखरिणी वृत्तम् ॥

स्पृहयति भुजयोरन्तरमायतकरवालकररुहविदीर्णम् ।
विजयश्रीर्वीराणां व्युत्पन्नप्रौढवनितेव ॥ २५ ॥

आयत य. करवाल खड्ग कररुह इव तेन विदीर्णम् । पक्षे आयतकरसम्बन्धिनो ये बालकररुहा. कोमलनखा यद्वा करवाल इव कररुहास्तैर्विदीर्णम् । व्युत्पन्ना शृङ्गारविषये लब्धप्रावीण्या प्रौढा प्रगल्भा च । वनिता सुन्दरस्त्री ।

१ सख. २ ण्डजात, प्रान्त, प्रपात-प्र.प. ३ परिचितपले.

॥ श्रीगणेशाय नमः ॥

# अथ वैराग्यशतकम् ।

चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभास्वरो
लीलादग्धविलोलकामशलभः श्रेयोदशाग्रे स्फुरन् ।
अन्तःस्फूर्जदपारमोहतिमिरप्राग्भारमुच्चाटयं-
श्चेतःसद्मनि योगिनां विजयते ज्ञानप्रदीपो हरः ॥ १ ॥

चूडायां केशपाशे उत्तंसिता भूषणीकृता चारु सुन्दरा या चन्द्रकलिका चन्द्रकला तस्याः चञ्चन्ती स्फुरन्ती या शिखा किरणदीप्तिस्तया भास्वरः । लीलया अनायासेन दग्धः विलोलः काम एव शलभः कीटविशेषः येन सः । श्रेयः शिव एव दशा वर्तिः । तस्याः अग्रे । अन्तः स्फूर्जन् अन्तःकरणे प्रसरन् यः अपारः मोहः स एव तिमिरं तमः तस्य प्राग्भारं संहतिमुच्चाटयन् विनाशयन् । ज्ञानरूपप्रदीपो हरः योगिनां ध्यायिनां चेतःसद्मनि चेतोमन्दिरे विजयते सर्वोत्कर्षेण वर्तते । तेन तं प्रणतोऽस्मीत्यर्थो लभ्यते । शार्दूलविक्रीडितं वृत्तम् ॥

आदौ सहृदयाभावात्सुभाषितस्यानवकाशता निर्दिशति—

बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ।
अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥ २ ॥

बोद्धारः सदसद्गुणपरीक्षिहेतवो ज्ञानिनः । मत्सरेण अन्यशुभद्वेषेण ग्रस्ताः व्याप्ताः । प्रभवः राजानो धनाढ्या वा स्मयेन गर्वेण दूषिताः । अत एव श्रवणविमुखाः । अन्ये उत्कृष्टविवेकरिक्ताः प्राकृता जनाः अज्ञानेनोपहताः सदसतोरन्तरं ज्ञातुमसमर्था इत्यर्थः । अतः सुभाषितमङ्गे जीर्णं गुणग्रहीत्रभावादित्यर्थः । पादत्रयस्य चतुर्थपादं प्रति हेतुत्वात्काव्यलिङ्गमलंकारः । अनुष्टुप् छन्दः ॥

अथ तृष्णादूषणम् ।

विषयानुरागस्य तृष्णामूलत्वात्तस्याश्च वैराग्यप्रतिबन्धकत्वात्तामेवादौ दूषयति ।

उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संतोषिताः ।-

---

१ भासुर. २ प्रधानो. ३ अङ्गेतु भाषितम्

मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥ ३ ॥

निधेः निक्षेपस्य शङ्कया लब्धेराशया । ध्माताः सुवर्णभावं लप्स्यन्त इति धिया विशिष्टाः पक्षादीनां योगेनाग्नौ संस्कृताः । धातवः—सुवर्णरूप्यताम्रारमहरितालमनःशिलाः । गैरिकाञ्जनकासीसलोहसीसाश्च हिङ्गुलः । गन्धकाभ्रकमित्याद्या धातवो गिरिसम्भवाः ॥ इत्युक्ताः । निस्तीर्णाः द्वीपान्तरे वाणिज्येन धनलाभः स्यादिति हेतुनेत्यर्थः । मन्त्राराधने मन्त्रदेवताप्रीत्यै तत्साधने तत्परेण । श्मशाने तत्रस्थानां भूतपिशाचादीनां निग्रहादिदर्शनोन्मुखीकरणायेति भावः । काणवराटकः कपर्दिकाशकलम् । 'कपर्दश्च वराटकः' इति हलायुधः । शार्दूलवि० वृत्तम् ॥

भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किञ्चित्फलं
त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला ।
भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकव-
त्तृष्णे जृम्भसि पापकर्मनिरते नाद्यापि सन्तुष्यसि ॥ ४ ॥

अनेकैः दुर्गैः पर्वतनदीगहनादिभिर्विषमं दुःसञ्चारं । देशं भ्रान्तं देशे भ्रमणं कृतम् । 'नपुंसके—' इति भावे क्तः । देशशब्दः क्वचित्पुंनपुंसकलिङ्गः । उचितं योग्यम् । मानेन विवर्जितं यथा स्यात्तथा । आशङ्कया निष्कासनभयेन । काकेन तुल्यं काकवत् । हे पापकर्मणि निरते सक्ते पापाचरणाय प्रवर्तयित्रि इत्यर्थः । न संतुष्यसि । अतः परं कस्यामापदि पातयितुमिच्छसीति भावः । वृत्तं पूर्ववत् ।

खलोल्लापाः सोढाः कथमपि तदाराधनपरै-
र्निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा ।
कृतश्चित्तस्तम्भः प्रतिहतधियामञ्जलिरपि
त्वमाशे मोघाशे किमपरमतो नर्तयसि माम् ॥ ५ ॥

खलानामुल्लापाः दुर्भाषितानि । तेषामाराधने सेवने परैः प्रसक्तैरेवंभूतैरस्माभिरिति शेषः । कथमपि महाकष्टेन सोढा मर्षिताः । नैतदेव केवलं किन्तु

---

१ क्षमा. २ सन्ततश्च वराटकोऽपि ३ त्यक्त्वा मम. ४ भ्रान्त्वा. ५ सेवा. ६ दुर्गति, वैषम्ये ७ विधुने ८ खलालापाः ९ निरुद्धस्मदि० १० सहसित

अन्तर्गतमपि निरुद्धय शून्येन हास्यजनकभावशून्येन मनसा ते हसन्तीति हसितमपि । तेषां खलानां हसितमपि कार्याकार्यविचारशून्येन मनसा सोढमिति केषाञ्चिद्व्याख्यानं न सहृदयानां प्रीतिकरम् । चित्तस्तम्भान्तर्गतभावगुप्ति । अन्तर्गतो वापि विकारो न प्रकटीकृत इत्यर्थः । तथा प्रतिहता धीर्येषां तथा जडधियामित्यर्थः । वित्तस्तम्भेति पाठे वित्तेन यः स्तम्भो जडता तेन प्रतिहता विचारशून्यमनसां । धीयताम् । प्रहसितानि पाठे प्रहसिते पारकाले धीबुद्धिर्येषां तेषाम् । अञ्जलिर्नमस्कारोऽपि कृतः । मोघा निष्फला आशा यस्याः सा । हे आशे इत्थं कृतपुरतस्तवाधिपरमस्यापि यत् हठात् मां नर्तयसि नृत्यकार्ये योजयसि । शिखरिणी वृत्तम् ॥

अथ तृष्णाभिभूतैरनुचितमप्यस्माभिः कृतमित्याह—

अमीषां प्राणानां तुलितबिसिनीपत्रपयसां
कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् ।
यदाढ्यानामग्रे द्रविणमदनिःशङ्कमनसां
कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ६ ॥

तुलिता तुल्यतां प्रापिता बिसिन्याः पद्मिन्याः पत्रेषु यत्पयस्तद्येषाम् । तदनुरूपाणां प्राणानां कृते रक्षणार्थम् । अथ कृत शब्दौ द्वौ तादर्थ्याव्ययसंज्ञितौ । विगलितो विवेको येषां तैरस्माभिः ।

तृष्णातुरैः क्लेशादिकं सोढं किन्तु न किमपि फलं लब्धमित्याह—

क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न सन्तोषतः
सोढो दुःसहशीतवाततपनक्लेशो न तप्तं तपः ।
ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शम्भोः पदं
तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चिताः ॥ ७ ॥

परदुरुक्तादि क्षमया हेतुभूतया न सोढं किन्तु भयहेतुनाऽशक्त्या वा । गृहोचितं स्वादुभार्यापुत्रसमागमादि सुखं संतोषेण हेतो न त्यक्तं किन्तु परतन्त्रत्वादनिच्छया । दुःसहशीतादिक्लेशः सोढः किन्तु तपो न तप्तम् । नियमित-

१ यदाढ्या० २ निःशङ्क ३ ध्यातं ४ कथापातक. ५ सोढः—क्लेश,—तपनात् क्लेशस्य ६ वञ्चिताः.

प्राणै निरुद्धप्राणवृत्त्या अहर्निशं सततं वित्तं ध्यातं न शंभोः पदम् । एवं च यदेव मुनिभि । ईश्वरमननान्मुनि. । तैः क्षान्तिसुखत्यागादि कर्म कृतं तत्तदस्माभिरपि कृतम् । किंतु तत्तत्कर्मफलेन वयं वञ्चिताः । मुनिभिः प्राप्यमाणं फलं न लब्धमिति भाव. । विशेषोलंकार । शार्दूलविक्रीडितं वृत्तम् ॥

अथ त्रिभिर्जीर्णेपि देहे तृष्णा न शाम्यतीत्याह—

> भोगा न भुक्ता वयमेव भुक्ता-
> स्तपो न तप्तं वयमेव तप्ताः ।
> कालो न यातो वयमेव याता-
> स्तृष्णा न जीर्णा वयमेव जीर्णाः ॥ ८ ॥

भुज्यन्ते इति भोगा इन्द्रियार्थाः । वयमेव भुक्ता. सर्वभक्षकेण कालराक्षसेन इति शेष । तप्ता आध्यात्मिकादितापत्रयेण । याता अन्तकायां अन्तिमावस्थामित्यर्थ. । एतेन स्वजन्मवैफल्यं द्योतितम् । विषमोलंकारः । उपजातिर्वृत्तम् ॥

> वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः
> गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ ९ ॥

वलिभिर्जराश्लथचर्मरेखाभि· । आक्रान्तं व्याप्तम् । पलितैः शुभ्रकेशैः । अंकितं चिह्नितम् । गात्राणि इन्द्रियगोलकानि शिथिलीभवन्ति । किंतु एका तृष्णा तरुणायते । कर्तुः क्यङ् सलोपश्चेति ( ३–१–११ ) क्यङ् । अकृत्सार्वधातुकयोर्दीर्घ. ( ७–४–२५ ) इति दीर्घ । देहेन्द्रियादिसामर्थ्यनाशेऽपि तृष्णाविरामः कदाचिदपि न भवतीति समुदितार्थः । अनुष्टुप् छन्दः ।

> निवृत्ता भोगेच्छा पुरुषबहुमानो विगलितः
> समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः
> शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने
> अहो धृष्टः कायस्तदपि मरणापायचकितः ॥ १० ॥

भोगेच्छा विषयभोगेच्छा निवृत्ता । असामर्थ्यात् । न तु तृष्णाया निर्मूलनात् । पुरुष इति भावप्रधानो निर्देशः । पौरुषोत्तम इत्यर्थ. । बहुमान गलित. तत्कारणपौरुषाभावात् । सुहृद सखाय । प्रत्युपकारानिरपेक्ष उपकारकर्ता सुहृदिति भाष्य-

१ वलिभिर्मा २ मानोपि ३ समाः. ४ यष्टि, अक्षुः. ५ मूढ., दुष्ट.

कृदादिभिः पूज्यैर्याख्यातोयं । जीवितेन समाः समाना स्वसमानवयस सपदि तत्काल स्वर्याताः स्वर्गं गताः । परलोकवासिनः सवृत्ताः । न त्वहं मन्दभाग्य । याने मन्द मन्द यष्टयुत्थानं सहायभूतया यष्टया उत्थान । घन सान्द्र यत्तिमिरं पाटलाद्यनेत्ररोगविशेष तेन रुद्धे । स्वार्थग्रहणासमर्थे जाते । पञ्चम्या अपक्षयलक्षणया भावविक्रियया आपादितत्वात् । तदपि ईदृशी कष्टावस्थां प्राप्तोऽपि काय मरणरूपापायाच्चकितो भीतो भवति । कष्टतरावस्थया क्लिश्यमानोपि जन्तुर्न देहसबन्धि ममत्वाभिमान त्यजतीति भावः । अतिकष्टास्वप्यवस्थासु जीवितनिरपेक्षा न भवन्ति खलु प्राणिनां प्रवृत्तय इत्यनुरूपो भावः कादम्बर्याम् । शिखरिणी वृत्तम् ॥

अथ तृष्णाया प्राकृतजनदुस्तरत्वं द्योतयितुं तां महानदीत्वेन रूपयति—

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।
मोहावर्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥११॥

आशास्यायता तृष्णा । आशा तृष्णापि चायता । इत्यमर । नामेति प्राकाश्ये । मनोरथा कामा एव जलानि यस्याम् । तृष्णास्तत्तदर्थप्राप्त्यभिलाषा एव तरङ्गास्तैराकुला । रागा प्रीतिविशेषाः । त एव ग्राहा मकरा सन्त्यस्याम् । वितर्का सङ्कल्पविकल्पात्मकवृत्तयो विहगाः पक्षिणो यस्याम् । धैर्यं धीरता एव द्रुमस्त ध्वंसयतीति तथा । मोहा अज्ञानवृत्तय एव आवर्ता तै सुदुस्तरा । अत्यन्तदुःखेन तरणं यस्याः सा । प्रोत्तुङ्गा प्रकर्षेणोत्तुङ्गोन्नता चिन्ता सैव तटी यस्याः सा । विशुद्धं निर्मल मनो येषाम् । योगोऽस्ति एषां ते योगिन तेषामीश्वरा । एवंविधाया नद्याः पारंगता । ज्ञानप्लवेनेति शेष । सिद्धा निरतिशयानन्दभाजो भवन्ति । अन्ये कलुषितान्तःकरणा अस्यां निमज्जन्त सन्त क्लिश्यन्त इति तात्पर्यम् । अत्राविच्छिन्नप्रवाहरूपत्वादाशाया नदीसाम्यम् । सर्वत्र संचलनसंभ्रमत्वादिसादृश्यान्मनोरथानां जलत्वेनरूपणम् । उत्पत्तिविलयसातत्यात्तृष्णासु तरङ्गत्वारोपणम् । एवमन्यत्राप्यूह्यम् । समस्तवस्तुवर्तिसावयवरूपकालंकार । शार्दूलवि॰ वृत्तम् ॥

---

१ वर्षे २ वर्ती.

अथ विषयपरित्यागविडम्बना—

आशानद्याः पारगता निर्मलमनसो योगीश्वरा एव नन्दन्तीत्युक्तम् । तच्चान्तरेण विषयत्यागं न संभवतीत्यधुना विषयविडम्बनोच्यते—

न संसारोत्पन्नं चरितमनुपश्यामि कुशलं
विपाकः पुण्यानां जनयति भयं मे विमृशतः ।
महद्भिः पुण्यौघैश्चिरपरिगृहीताश्च विषया
महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥ १२ ॥

संसारोत्पन्नं चरितं जीवयात्रायामुत्पन्नान् भावान् । सुखकरमपीति शेषः । अनुपश्यामि विचार्य सुखपरिणामं न पश्यामि । कुत एतदित्याह विमृशतः परमार्थतः सुखोदर्का वा नेति विचारयतः । मम भयमुत्पादयति । तत्र हेतुमाह महद्भिः इति । महद्भिः पुण्यकर्मभिर्लब्धा इति शेषः । विषयाः चिरपरिगृहीताः चिरं सेव्यत्वेनाङ्गीकृताः । विषयिणाम् । न तु विवेकिनाम् । व्यसनं संसृतिरूपं दातुमिव । महान्तः स्फीताः अधिकाधिकदुःखदत्वात् । जायन्ते । अयं भावः । पुण्यपरिपाकस्य स्वर्गादिद्वारा विषयोपभोगः फलम् । ते च विषया यथा यथा भुज्यन्ते तथा तथा पुण्यक्षयो भवति आपद्रूपत्वेन पर्यवस्यन्ति च । तदुक्तं श्रीहर्षेण—पूर्वपुण्यविभवव्ययलब्धाः संपदो विपद एव विमृष्टाः । अथ च यज्ञादिसत्कर्मणां विपाकः स्वर्गे विषयोपभोगः सोऽपि नियतकाल एव । 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति स्मृतेः । एवमेते विषया आपाततः सुखोदर्का इव विषयिणां न तु विवेकिनां भासमानाः अन्ते तान् संकटेष्विव पातयन्ति । इदमेव भयकारणम् । एवं वैदिकामुष्मिकभोगानामनिष्टानुबन्धित्वात्त्याग एव श्रेयानिति भावः । शिखरिणी वृत्तम् ॥

विषया हि गमनशीला एवातः सर्वथा त्यक्तव्या इत्याह—

अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः
स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ १३ ॥

विषयाः शब्दादयः । चिरतरं बहुकालमुषित्वापि स्थित्वापि । चिरपरिचयवन्तोऽपि । अवश्यं निश्चयेन यातारः गन्तारः । ते हि अनित्याः खलु इति

१ दत्त्वा २ देहे.

निश्चिते सति तेषां मनःपूर्वकत्यागे स्वयं गमने वा को भेदः । न कोपीति आक्षेपपूरणम् । यद्यन्ते हेतो जनः स्वयममून् त्यजति । वियोगे स्वरूपतो भेदाभावेपि फलतो भेदं दर्शयन्ति । एते स्वातन्त्र्याद् यजन्तो गच्छन्तो मनसोऽतुलपरितापाय भवन्ति । स्वयं त्यक्तास्तु तेषां बुद्धिपूर्वकत्याने अनन्तां न मोक्ष शमसुखं समाधानलक्षणं विदधति कुर्वन्ति । विषयाणां स्वतः वियोगे तु महदुःखेशामनर्थकरत्वालोचनेन बुद्ध्या हानं तु निरतिशयानन्ददायि तस्मात्पुरुषेण अवश्यं तेषां हानं कर्तव्यमिति भावः । तदुक्तम्-यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ वृत्तं पूर्वोक्तम् ॥

क इमं दुष्करं विषयत्यागं कर्तुं समर्था इत्याकाङ्क्षायामाह—

ब्रह्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं
यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निःस्पृहाः ।
न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययो
वाञ्छामात्रपरिग्रहाण्यपि परं त्यक्तुं न शक्ता वयम् ॥ १४ ॥

ब्रह्मज्ञानविवेकेन ब्रह्मविषयं ज्ञानं तस्माद्विवेकः तत्त्वविचारस्तेन निर्मला धीः येषाम् । शुद्धान्तःकरणाः । दुष्करं कुर्वन्ति । अहो इत्याश्चर्ये । किं तदित्याह । यद् उपभोगभाञ्जि उपभोगवन्त्यपि धनानि मुञ्चन्ति । एकान्ततः निश्चयेन निःस्पृहाः निर्गतेच्छाः । पुरा भूतकाले संप्रति वर्तमाने वा न प्राप्तानि न वा तेषां प्राप्तौ प्राप्तिविषये दृढप्रत्ययः दृढविश्वासः । तथापि वाञ्छा एव वाञ्छामात्रं तेन परिग्रहो येषां तान्यपि वयं प्राकृता जनाः परम् अत्यन्तं यथा स्यात्तथा त्यक्तुं न शक्ताः । अतस्तृष्णां विजित्य ब्रह्मज्ञानं सम्पाद्य विषयत्यागोऽवश्यं कर्तव्य इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

धन्यानां गिरिकन्दरे निवसतां ज्योतिः परं ध्यायता-
मानन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्केशयाः ।
अस्माकं तु मनोरथोपरचितप्रासादवापीतट-
क्रीडाकाननकेलिकौतुकजुषामायुः परिक्षीयते ॥ १५ ॥

गिरिकन्दरे पर्वतविवरे । विजने इत्यर्थः । विविक्तसेवी लघ्वाशी ( गी. १८-५२ ) इति भगवद्वचनात् । परं ज्योतिः स्वप्रकाशं परं ब्रह्म ध्यायतां ध्या-

१ विवेकविलोसन. २ काञ्चनानि० ३ धनिकामाः ४ कन्दरेषु व ५ कान्तार. ६ मनोरथैः परिचित. ७ परं

नेनानुभवता धन्यानां कृतकृत्यानां पुरुषाणां आनन्दाश्रुजलं निःशंकं यथा स्यात्तथा निर्भयं शकुनाः पक्षिणः तेषामङ्के उत्सङ्गे शेरते इति तदङ्केशयाः । अधिकरणे शेते । इत्यच्प्रत्ययः । पिबन्ति । तुशब्द पक्षान्तरद्योती । मनोरथेन उपरचितः यः प्रासादः तस्य वाप्याः तटे यत् क्रीडार्थं काननं तत्र केल्याः कौतुकं पुपन्तीति •कौतुकजुष तेषाम् । यद्वा मनोरथोपरचितः प्रासादश्च वापीतटं च क्रीडाकाननं च तेषु इत्यादि योज्यम् । अस्माकं पूर्वोक्तविपरीतवृत्तीनां तु आयुः आयुष्यं परिक्षीयते । पूर्वोक्तानां धन्यानां जीवितं सफलमस्माकं तु व्यर्थमित्यर्थः । शार्दूल० वृत्तम् ॥

भोगाभावेपि विषयत्यागे प्रवृत्तिर्न भवतीत्याह—

भिक्षाशनं तदपि नीरसमेकवारं
शय्या च भूः परिजनो निजदेहमात्रम् ।
वस्त्रं सुजीर्णशतखण्डमयी च कन्था
हा हा तथापि विषयान्न जहाति चेतः ॥ १६ ॥

भिक्षाशनं भैक्षभोजनं । तदपि नीरसं मधुरादिरसवर्जितमेकवारं च । परिजनः सेवकवर्गः स्वस्य देह एव स्वदेहमात्रं न तु तद्व्यतिरिक्तः कश्चिद्भार्यापुत्रादिः । सुतरां जीर्णानि शतं खण्डानि तेषां विकारः । तन्निर्मितेत्यर्थः । तत्प्रचुरा वा । कन्था च वस्त्रम् । हाहेति खेददर्शको निपातः । तथापि एवं वैराग्यहेतौ निकृष्टावस्थायामपि पुरुषं विषिण्वन्ति पुरुषपशुं बध्नन्तीति विषयास्तान् । मोक्षे धीर्न क्रियत इत्यर्थः । अत्र सत्स्वपि विषयपरित्यागकारणे पुतत्कल्यानुदयाद्विशेषोक्तिरलंकारः । वसन्ततिलका वृ० ।

अथ विषयासक्तौ कामिन्याः प्रधानहेतुत्वात्तद्रूपमेव दूषयति—

स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ
मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम् ।
स्रवन्मूत्रक्लिन्नं करिवरशिरःस्पर्धि जघन-
महो निन्द्यं रूपं कविजनविशेषैर्गुरु कृतम् ॥ १७ ॥

स्तनौ अन्नपरिणामस्य मांसस्य ग्रन्थी तथापि कनकघटोपमानेन वर्णितौ । मुखं श्लेष्मणः स्थानम् । किंतु तदपि शशाङ्केन चन्द्रेण तुलितं तत्तुल्यत्वेन वर्णितम् । स्रवन्मूत्रेण क्लिन्नमार्द्रमपि जघनं स्त्रीकटीपुरोभागः तत्करिश्रेष्ठस्य शिरःस्पर्धि ।

---

१ च जी०, जीर्णशत-जीर्णपट- २ विषया, विषयान्-न परित्यजन्ति

तारुण्यस्ये गिनि' । इति वर्णितम् । अहो निन्द्य निन्दायोग्यं रूपं लौलावण्यं कविजनविशेषैः केश्चित् कामिजनरञ्जनतत्परैः कविभिर्गुरु कृतम् । महत्त्वमारोपितमित्यर्थः । वृत्तं शिखरिणी ॥

एक परमेश्वर एवैकान्ततोनुरक्तोननुरक्तश्च शेष सर्वोपि जनो मारमार्गणपरवशः क्लिश्यत एव इत्याह—

एको रागिषु राजते प्रियतमादेहार्धहारी हरो
नीरागेषु जनो विमुक्तललनासङ्गो न यस्मात्परः ।
दुर्वारस्मरबाणपन्नगविषव्याविद्धमुग्धो जनः
शेषः कामविडम्बितान्न विषयान्भोक्तुं न मोक्तुं क्षमः ॥ १८ ॥

राग अनुराग अस्त्येषामिति रागिण कामुकास्तेषु । प्रियतमाया देहार्धं हरतीति तच्छील । अर्धं नपुंसकम् । इति समास. । निर्गत राग येषां तेषु । विमुक्त ललनायामासङ्ग येन स' । यस्मात् हरात् पर श्रेष्ठोऽन्यो वा न । दुर्वारा ये स्मर काम' तस्य बाणा एव पन्नगा सर्पा तेषां विषेण व्याविद्धः अत एव मुग्ध' शेषो जन कामेन विडम्बितान् विषयान् भोक्तु मोक्तु च न क्षम समर्थं । उभयमपि कर्तुमसमर्थं क्लेशमात्रमवतीत्यर्थ. । बाणपन्नगेत्यत्र रूपकालंकार. । शार्दूलवि॰ वृत्तम् ॥

सत्यपि विषयोपभोगदोषज्ञाने यद्विषया परित्यक्तु न शक्यन्ते तत्र मोहमहिमैव हेतुरिति निर्दिशति—

अजानन्माहात्म्यं पततु शलभो दीपदहने
स मीनोप्यज्ञानाद्बडिशयुतमश्नातु पिशितम् ।
विजानन्तोप्येते वयमिह विपज्जालजटिला-
न्न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ १९ ॥

शलभ कीटविशेष । माहात्म्यं दाहशक्तिमजानन्दीपस्य दहने ज्वालायां पततु नाम । न स तस्यापराध' । अज्ञानोपहतत्वात् । दाहात्म्यमिति पाठे दह्यतेऽनेनेति दाहस्तदयात्मा स्वभावस्तस्य भावो दाहात्म्यम् । मीनोऽपि अज्ञानात् बडिशयुतं मत्स्यवेधनेन युत सम्बद्ध पिशित मांसमश्नातु कामं भक्षयतु । आ-

१ शमार्गेणा १ दाहात्म्यं, दाहार्तिम् ३ लोभ.

मिषलोभाद्दृकरुकण्टकक्षतगलो म्रियतामित्यर्थः । परतु वय इह ससारे विशेषेण जानन्त । सदसद्विवेकवन्तोऽपि विपज्जाले आपत्समूहे । जटिलान् ग्रथितान् कामान् न मुञ्चाम । एव चेद्वयमेवात्रापराध्याम । मैवं वत. । अहहेति खेदे । मोहस्य महिमा गहनो दुर्विज्ञेय. खलु । प्रबलतरमोह एवात्र कारणमित्यर्थः । शिखरिणी वृत्तम् ॥

अज्ञानोपहतो नर परमार्थत सुखाभावेप्यन्नादिविषयेषु सुखबुद्धिं करोतीत्याह—

तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि
क्षुधार्त संञ्शालीन्कवलयति शाकादिवलितान् ।
प्रदीप्ते रागाग्नौ सुदृढतरमाश्लिष्यति वधूं
प्रतीकारो व्याधेः सुखमिति विपर्यस्यति जनः ॥ २० ॥

तृषा जलाभिलाषेण आस्ये मुखे शुष्यति शोष प्राप्नोति सति । शाकादि-वलितान् शालीन् शाकादियुक्तान्नयुक्तमोदनमित्यर्थः । कवलयति भक्षयति । राग एव अग्नि तस्मिन्प्रदीप्ते सति सुदृढतर अत्यन्तगाढ यथा स्यात्तथा वधूं स्त्रियमाश्लिष्यति । एवं व्याधे पीडाया प्रतीकार सुखमिति जन । जातावेकवचनम् । विपर्यस्यति विपर्ययेण जानाति । अतस्मिंस्तद्बुद्धिर्विपर्यास । मधुरजलशाल्योदनादि तृषादिवृद्धिहेतवोपि तन्द्शान्तिकरं मन्यत इत्यर्थ । वृत्त पूर्वोक्तम् ॥

अधुना गृहपुत्रादिषु नश्वरेष्वपि ममत्वबुध्या भ्रान्तो नरो बद्धो भवति ज्ञानी तु सर्वसङ्गं परित्यज्य मुक्तो भवतीति निगमयति—

तुङ्गं वेश्म सुताः सतामभिमताः संख्यातिगाः संपदः
कल्याणी दयिता वयश्च नवमित्यज्ञानमूढो जन ।
मत्वा विश्वमनश्वरं निविशते संसारकारागृहे
संदृश्य क्षणभङ्गुरं तदखिलं धन्यस्तु संन्यस्यति ॥ २१ ॥

तुङ्ग उच्छ्रितं वेश्म गृहं सतां सज्जनाना अभिमता । कतिबुद्धीत्यादिना वर्तमानार्थे क्त । सुता: पुत्रा: । सख्यामतिक्रम्य गच्छन्तीति संख्यातिगा. संपदः संपत्तयः । कल्याणी शुभावहगुणोपेता दयिता स्त्री । नवं च वय. । इत्याकारकेण अज्ञानेन मूढो जन इदं विश्व अनश्वर नित्य मत्वा ससारकारागृहे बन्दिवासे निविशते । 'नेर्विश' इति आत्मनेपदम् । परंतु कश्चिदन्योऽपरः । ज्ञानी-

१ तृषार्तः सञ्शाली. २ शीतमधुर-सुरभि. ३ शालयन्न ४ कामाग्नौ ५ माश्लिष्यति.

स्यर्थ । तदखिलं सर्वं जगत् क्षणभङ्गुरं निश्शारत्वाय दृष्ट्वा सन्न्यस्यति परि-व्रजति । सर्वसङ्गपरित्यागं कुर्वाणः पुरुषः कश्चित्कश्चिदेव आश्रयवान् दृश्यत इति एकवचनप्रयोगेण सूचितम् । शार्दूलविक्रीडितं वृत्तम् ॥

अथ याच्ञादैन्यदूषणम् ।

दीना दीनमुखैः सदैव शिशुकैराकृष्टजीर्णाम्बरा
क्रोशद्भिः क्षुधितैर्निरन्नविधुरा दृश्या न चेद्गेहिनी ।
याच्ञाभङ्गभयेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं
को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी पुमान् ॥ २२ ॥

दीनानि मुखानि येषां तैः । क्षुधा एषां सञ्जाता इति क्षुधितानि तैः क्षुधितैः । तदस्य सञ्जातं तारकादिभ्य इतच् । इति इतच्प्रत्ययः । क्षुत्पीडितैः अत एव क्रोशद्भिः क्रोशं कुर्वाणैः शिशुकैः बालकैः । अनुकम्पायां कन् । आकृष्टं जीर्णम्बरं वस्त्रं यस्याः सा । विधुरा अनाथभावाद्विकला गेहिनी भार्या न दृश्या न दृश्येत चेत् । याच्ञायाः भङ्गः तस्य भयेन स्वदग्धजठरार्थे दग्धस्य यद्दग्धं तुच्छं जठरं तस्यार्थे को मनस्वी जनः गद्गदं यथा गलं तत्र त्रुट्यन्ति विलीनानि च अक्षराणि यथा स्युः तथा 'देहि' इति वदेत् । न कोऽपीत्यर्थः । 'अभ्यर्थनाभङ्गभ-येन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे' । इति न्यायात् । वृत्तम्० ।

अथ जठरमेव सकलदैन्यमूलकारणमिति तदेव निन्दति—

अभिमतमहामानग्रन्थिप्रभेदपटीयसी
गुरुतरगुणग्रामाम्भोजस्फुटोज्ज्वलचन्द्रिका ।
विपुलविलसल्लज्जावल्लीविदारकुठारिका
जठरपिठरी दुष्पूरेयं करोति विडम्बनम् ॥ २३ ॥

अभिमतः यः महामानः तस्य ग्रन्थिः तस्य प्रभेदः विभेदनं तस्मिन्पटीय-सेन पटु । गुरुतरः यः गुणानां गाम्भीर्यधैर्यादीनां समूहः स एव अम्भोजानि तेषां स्फुटा चासौ उज्ज्वला च चन्द्रिका पूर्णिमाकौमुदी । तत्सङ्कोचहेतुरित्यर्थः । विपुलं यथा तथा विलसन्ती या लज्जाख्या वल्ली तस्याः विदारे छेदे कुठारिका परशुः । जठरपिठरी उदरकुण्डी इयं दुष्पूरा विडम्बनं करोति । उदरपूरणार्थं सर्वोऽपि जनः अकार्यकरणं अवाच्यवचनं अदेयदानं च करोतीत्यर्थः । तदुक्तं सुरेश्वरा-

१ स्वधीय २ नीते. दूरेण ३ स्फुटदि. ४ जन. ५ विदान

चार्यैः—अस्य दरपोदरस्यार्थे किं न कुर्वन्त्यसाम्प्रतम् । इति । रूपकालंकारः । हरिणीवृत्तम् ॥

वर मानिनो भिक्षया प्राणधारणं न तु स्वबन्धुमध्ये आढ्याद्दैन्यमित्याह—

**पुंण्ये ग्रामे वने वा महति सितपटच्छन्नपालीं कपाली-**
**मादाय न्यायगर्भद्विजहुतहुतभुग्धूमधूम्रोपकण्ठम् ।**
**द्वारं द्वारं प्रवृत्तो वरमुदरदरीपूरणाय क्षुधार्तो**
**मानी प्राणी स धन्यो न पुनरनुदिनं तुल्यकुल्येषु दीनः॥२४॥**

सितेन शुभ्रेण पटेन छन्ना आच्छादिता अन्यदृष्टिपरिहरणार्थमिति भावः । पाली प्रान्तप्रदेशो यस्याः ता कपालीं भिक्षापात्रमादाय नीयन्ते अर्था एभिरिति न्याया वेदशास्त्राणि ते गर्भे कुक्षौ येषां तथाभूता अधीतवेदादिविद्या इत्यर्थः । ये द्विजाः ते. । यद्वा न्यायाः स्वरा उदात्तादय. । यथास्वरं मन्त्रान्पठद्भिरित्यर्थः । हुतो यो हुतभुग् अग्नि तस्य धूमेन धूम्रं उपकण्ठं यस्य तद् पवित्रमित्यर्थः । द्वारं द्वारं प्रतिद्वारं प्रवृत्त । उदरमेव दरी कंदरः तस्य पूरणाय पूर्त्यर्थम् । क्षुधया आर्तो व्याकुल. क्षुधार्तः मानी प्राणी स धन्यः । न पुनः अनुदिनं प्रतिदिवसम् । तुल्याश्च ते कुले भवाः कुल्याश्च । यद्वा तुल्यकुले साधवः तेषु स्वसमानजातीयेषु दीनवद् आचरणं कुर्वाण' । तदुक्तं—न बन्धुमध्ये धनहीनजीवितम् । स्रग्धरावृत्तम् ॥

एवं चेत्किं कर्तव्यमित्यत आह—

**गङ्गातरङ्गहिमशीकरशीतलानि**
**विद्याधराध्युषितचारुशिलातलानि ।**
**स्थानानि किं हिमवतः प्रलयं गतानि**
**यत्सावमानपरपिण्डरता मनुष्याः ॥ २५ ॥**

गङ्गायाः तरङ्गाः तेषां ये हिमशीकरा शीततुषाराः तैः शीतलानि । विद्याधरैरध्युषितानि सेवितानि चारूणि शिलातलानि येषां तानि । हिमवतः हिमालयस्य स्थानानि किं प्रलयं गतानि । किंशब्दो वितर्के प्रश्ने वा । कुत्साप्रश्नवितर्केषु क्षेपे किंशब्द इष्यते । इति शाश्वतः । यत् यस्माद्धेतोः मनुष्या अवमानेन स-

१ पुण्यग्रामे २ ज्ञान, न्यायगर्भा. ३ कण्ठे ४ प्रविष्ट. ५ मानैः सनाथ.. ६ स्वरैः. ७ कण, घन.

हिताः । सतिरस्कारं दत्ता इत्यर्थः । ये परेषां पिण्डा अन्नग्रासा तेषु रता आसक्ताः स्युः । दुर्जनयाच्ञां त्यक्त्वा हिमवत्परिसरेषु सुखेन वर्तितव्यमितिभावः ॥ वसन्ततिलका वृत्तम् ॥

इदानीं श्रेयांस जीवनोपायं विहाय दुर्जनाश्रयिणां जनानां चेष्टितं वितर्कद्वारा दूषयति—

किं कन्दाः कन्दरेभ्यः प्रलयमुपगता निर्झरा वा गिरिभ्यः
प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलिन्यश्च शाखाः ।
वीक्ष्यन्ते यन्मुखानि प्रसभमपगतप्रश्रयाणां खलानां
दुःखोपात्ताल्पवित्तस्मयपवनवशानर्तितभ्रूलतानि ॥ २६ ॥

कन्दरेभ्यः पर्वतविवरेभ्यः कन्दाः सस्यमूलानि जीवनहेतुभूतानि प्रलयं विनाशम् । उपरममित्यर्थः । जुगुप्साविरामेत्यादिना पञ्चमी । उपगता नष्टाः किम् । अथवा गिरिभ्यो निर्झरा उदकप्रवाहा नष्टाः किमिति अत्रेऽपि अनुकर्षः । तरुभ्यः सरसानि रसवन्ति फलानि बिभ्रति ताः वल्कलिन्यः वाल्कलवत्यश्च शाखा वा प्रध्वस्ता किम् । कुत एव वितर्कयते इतिचेत् । यद्यत प्रसभं हठात् यथा स्यात्तथा अपगतः प्रश्रयः विनयो येभ्यः तेषामविनीतानां खलानां दुःखेन उपात्तं यदल्पं वित्तं तस्माद्यः स्मयो गर्वः स एव पवनस्तस्य वशेन आनर्तिता भ्रूरेव लता येषु तानि मुखानि वीक्ष्यन्तेऽवलोक्यन्ते । याचकैर्जीवनहेतोरिति शेषः । उक्तं च श्रीभागवते—चीराणि किं पथि न सन्ति दिशन्ति भिक्षां नो वाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन् । रुद्धा गुहाः किमु न सन्ति महानुभावा यस्माद्भजन्ति यतयो धनदुर्मदान्धान् ॥ स्रग्धरा छन्दः ॥

धनोन्मत्तदुर्वचोनिर्विण्णस्य कस्याप्युक्तिमाह—

पुण्यैर्मूलफलैः प्रिये प्रणयिनीं वृत्तिं कुरुष्वाधुना
भूशय्यानववल्कलैरकृपणैरुत्तिष्ठ यावो वनम् ।
क्षुद्राणामविवेकमूढमनसां यत्रेश्वराणां सदा
वित्तव्याधिविकारविह्वलगिरां नामापि न श्रूयते ॥ २७ ॥

---

१ पाठः किं विशीर्णाः । किं वा दोषं गतास्ते गिरिकुहरगता निर्झरा वारिपूर्णाः । २ दुःखसमर्जित ३ प्रिये प्रणयिनि, निवसन्त्यिनी, प्रियेश सांप्रतं ४ भूशय्या नववल्कलै कुरु तूर्णं ५ मकृतै, मकरन्दैः ६ याम ७ वने ८ गूढ. ९ वि-चित्तमोघ्यविवेक.

हे प्रिय सखे पुण्ये शोभने मूलफले । अदूरपर्णविपुले । अक्लेशार्जितैरिति पाठे याच्ञावर्जितैरित्यर्थः । भूशय्या च नवानि वल्कलानि च तैः । प्रणयिनी यत्र तत्र प्रणतः प्रीतिस्ताम् । इति वनम् । यत्र यस्मिन्वने क्षुद्राणां नीचपुरुषाणां अविवेकेन मूढानि विचारशून्यानि मनांसि येषां तेषामीश्वराणां स्वामिनां धनिनां वा । वित्तमेव व्याधिः तस्माद्विकारा न विद्यते गीर्येषां तेषाम् । धनमदमूढानां मर्मभेदकवाक्यश्रवणाद्दुःखं गहनवने मृगकल्पैर्वृत्तिकरणमिति भावः । शार्दूल० वृत्तम् ॥

सत्यस्यापि सुलभायां फलादिजीवनसामग्र्यां केचिद्धनिनां द्वारि अवमाननां संतापं सहन्त इत्यहो तेषां मौर्ख्यमित्याह—

फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम् ।
मृदुस्पर्शा शय्या सुललितलतापल्लवमयी
सहन्ते संतापं तदपि धनिनां द्वारि कृपणाः ॥ २८ ॥

स्वेच्छया लभ्यम् । वने वने प्रतिवनम् । अव्ययं विभक्ति- ( २. १. ६. ) इत्यादिनाव्ययीभावः । क्षितिरुहां वृक्षाणाम् । न विद्यते खेदो यस्मिन्कर्मणि तद्यथा तथा अखेदं निरायासमित्यर्थः । शिशिरं च तन्मधुरं च । पुण्याश्च ताः सरितः गङ्गाद्याः तासाम् । स्नानपानाभ्यां बाह्याभ्यन्तरमलप्रक्षालनात्पुण्यत्वम् । मृदुः स्पर्शो यस्याः सा तथा शय्या । सुललितानां लतानां पल्लवाः तेषां विकारः तत्प्रचुरा वा तन्मयी । तदपि एवं सत्यपि धनिनां श्रीमतां द्वारि कृपणाः कृपणमतयो धनलिप्सवः पुरुषाः संतापं सहन्ते । आश्चर्यमेतत् । कर्तव्याकर्तव्यं जानन्तो याच्ञादैन्यं विहाय वनवासमेवाङ्गीकुर्युरित्यभिसन्धिः । शिखरिणी वृत्तम् ॥

अधुना स्वकर्तव्यं निर्दिशति—

ये वर्धन्ते धनपतिपुरःप्रार्थनादुःखभाजो
ये चाल्पत्वं दधति विषयाक्षेपपर्यस्तबुद्धेः ।
तेषामन्तःस्फुरितहसितं वासराणां स्मरेयं
ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः ॥ २९ ॥

---

१ वर्तन्ते २ दीर्घा. ३ पर्यन्त

धनपतेः पुरः प्रार्थना याच्ञा तस्या दुःखं भजतीति दुःखभाक् तस्य । सर्वन्ते दीर्घा भवन्ति । विषयदेशादेः आकर्षण तेन पर्वता व्याकुला बुद्धिर्यस्य तस्य हन्त क्षणा भवन्ति । तेषां दिनानाम् । ध्यानच्छेदे शुभध्यानानन्तरम् । अन्तः स्फुरितं यथा स्यात्तथा स्मरेयम् । अत्रार्थविशेषो समाप्त इति कर्मणि षष्ठी । निर्गुणेन पर्वतस्य कुहरे विवरे यो ग्रावा पाषाणः स एव शय्या शयनं तस्यां निषण्णः उपविष्टः सन् । यत्नात् सर्वविषयाक्षेपरहितः परमेश्वरध्यानपरः कालं क्षपयेयमित्याशयः । मन्दाक्रान्ता वृत्तम् ॥

ये सन्तोषनिरन्तरप्रमुदितास्तेषां न भिन्ना मुदो
ये त्वन्ये धनलोभसंकुलधियस्तेषां न तृष्णा हता ।
इत्थं कस्य कृते कृतः स विधिना तादृक्पदं सम्पदां
स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥ ३० ॥

ये सन्तोषेण सदालाभमहिता निरन्तरं प्रमुदितास्तेषां मुदः भेदप्रदर्शनेन भिन्ना भेदं प्राप्ता न । ते भेदनिष्ठत्वविशेषेण इत्यर्थः । धनलोभेन संकुला व्याप्ता धीर्येषां । तेषां तृष्णा न हता न शाम्यति किन्तु वर्धते एव । एवं मेरुगता सम्पत् स्वर्णगिरौ प्रयोजनाभावव्यर्थः । शार्दूल॰ वृत्तम् ॥

एवं चेत् किं सर्वथा भिक्षाकाङ्क्षया जीवनोपायं दर्शयन्नुपसंहरति—

भिक्षाहारमदैन्यमप्रतिसुखं भीतिच्छिदं सर्वदा
दुर्मात्सर्यमदाभिमानमथनं दुःखौघविध्वंसनम् ।
सर्वत्रान्वहमप्रयत्नसुलभं साधुप्रियं पावनं
शम्भोः सत्रमवार्यमक्षयनिधिं शंसन्ति योगीश्वराः ॥ ३१ ॥

भिक्षाया भिक्षान्नस्याहारः यस्मिन् तत् । अदैन्यं याच्ञादैन्यवर्जितम् । अविद्यमानं प्रतिसुखं यस्य । निरतिशयसुखमित्यर्थः । सर्वदा भीतिच्छिदं भयनाशकम् । दुष्टाश्च ते मात्सर्यं च मदश्चाभिमानश्च मात्सर्य॰ना असहिष्णुत्वमदाहङ्कारास्तेषां मथनं नाशनं दुःखौघस्य विध्वंसनं सर्वत्र अन्वहं प्रतिदिनं अप्रयत्नेन सुलभं सुप्राप्यं साधूनां प्रियं पावनं पवित्रं शम्भोः सोऽस्त्यस्येति सत्रं शिवमार्गानुसरणं पूजनं वा योगिनामीश्वराः अक्षयो नित्यो निधिं शंसन्ति कथयन्ति । अतः शुभेच्छुभिः सर्वगुणोपेतं सदैवाश्रयणीयमिति भावः । वृत्तं शार्दूल॰ ॥

अथ भोगास्थैर्यपद्धतिः ।

अथ भोगास्थैर्यदर्शने नरो याच्मादैन्यं स्वयमेव परिहरेदिति मन्वानो भोगास्थैर्यमेव वर्णयति—

भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं
मानं दैन्यभयं बले रिपुभयं रूपे जराया भयम् ।
शास्त्रे वादभयं गुणे खलभयं काये कृतान्ताद्भयं
सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥३२॥

भोगे विषयाणां भोगे रोगाद्भयम् । 'पञ्चमी भयेन' इति पञ्चमीतत्पुरुषः । विषयभोगो रोगभयान्वित इत्यर्थः । कुले सद्वंशे च्युतेर्भयम् । उत्तमकुलप्रसूतस्य केनापि प्रकारेण मम कुलाचारभ्रंशः स्यादिति भीतिः वर्तते । वित्ते द्रव्ये नृपालाद्भयम् । राजा कदाचिद् द्रव्यं हरिष्यतीति । दैन्यभयं दीनस्य भावो दैन्यं तस्मात् । बले अङ्गबले सैन्ये वा । खलभयं दुष्टपुरुषेभ्यो भयम् । सज्जनगुणासहनमेव खलानां कुलव्रतम् । काये देहधारणे कृतान्तात् यमाद्भयम् । यज्जन्य तन्मर्त्यमिति न्यायात् । स्पष्टमन्यत् । शार्दूल०वृत्तम् ॥

अथ सर्वमैवैहिकं वस्तु तद्विनाशकेनान्येनाक्रान्तमतो भोगेभ्यः स्पृहा न कर्तव्येत्याह—

आक्रान्तं मरणेन जन्म जरया चात्युज्ज्वलं यौवनं
संतोषो धनलिप्सया शमसुखं प्रौढाङ्गनाविभ्रमैः ।
लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनै-
रस्थैर्येण विभूतयोऽप्युपहता ग्रस्तं न किं केन वा ॥३३॥

मरणेन जन्म आक्रान्तं व्याप्तम् । तदुक्तं-जातस्य हि ध्रुवो मृत्युरिति । अस्योत्तरत्राप्यनुकर्षः । अत्युज्ज्वलमतिरमणीयम् । विद्युच्चलमिति पाठे विद्युद्वच्चलं चञ्चलम् । धनलिप्सया धनप्राप्तीच्छया । शमसुखं निरुद्धान्तःकरणजन्यं सुखं प्रौढा या अङ्गनाः तासां विभ्रमैः विलासैः आक्रान्तम् । मत्सरिभिः परगुणासहिष्णुभिः । वनभुवः वनस्थलानि । नृपा दुर्जनैः दुष्टमन्त्रिभिः । तद्बुद्धिविपर्यासकारिभिरित्यर्थः । आक्रान्ताः । विभूतयः अस्थैर्येण अस्थिरभावेन उपहताः । अतः किं केन वा न ग्रस्तं सर्वमपि ग्रस्तम् । अतः बुद्धिमता पुरुषेण सर्वमनित्यं

१ भयात् २ विद्युच्चलं ३ विभूतिरप्युपहता, धृतिर्जगत्युपहता.

सदोषं च वस्तु विहाय नित्यवस्तुनि परमेश्वरे अन्तःकरणाभिनिवेशः कर्तव्य इत्यर्थः । वृत्तं शार्दू० ॥

पुनस्तदेव भङ्ग्यन्तरेण प्रतिपादयति—

आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते
  लक्ष्मीर्यत्र पतन्ति तत्र विवृतद्वारा इव व्यापदः ।
जातं जातमवश्यमाशु विवशं मृत्युः करोत्यात्मसा-
  त्तत्किं नाम निरङ्कुशेन विधिना यन्निर्मितं सुस्थिरम् ॥३४॥

विविधैः बहुप्रकारैः आधिर्मानसी व्यथा व्याधिः शरीररोगः तेषां शतैः जनस्य पुरुषस्यारोग्यं शरीरस्वास्थ्यमुन्मूल्यते । तथा यत्र लक्ष्मीः ऐश्वर्यं तत्र व्यापदः विविधा आपदः अवरुद्धानि विवृतद्वारा विवृतं द्वारमासां इति ता इव पतन्ति । मृत्युः कालः जातं जातं जातमात्रं विवशमाशु त्वरितमवश्यं नियमेन आत्मसात्करोति साकल्येन स्ववशं नयति । तदधीनवचने इति सातिप्रत्ययः । तत्किं नाम वस्तु यन्निरङ्कुशेन अप्रतिबन्धेन विधिना दैवेन प्रजापतिना वा सुस्थिरं निर्मितम् । न किंचिदपीत्यर्थः । शार्दूलविक्रीडितम् ॥

एवं चेत्किं कर्तव्यमित्याकाङ्क्षायां कर्तव्यं निर्दिशति त्रिभिः—

भोगास्तुङ्गतरङ्गभङ्गचपलाः प्राणाः क्षणध्वंसिनः
  स्तोकान्येव दिनानि यौवनसुखं प्रीतिः प्रियेष्वस्थिरा ।
तत्संसारमसारमेव निखिलं बुद्ध्वा बुधा बोधका
  लोकानुग्रहपेशलेन मनसा यत्नः समाधीयताम् ॥ ३५ ॥

भोगाः तुङ्गतरङ्गाणां भङ्गवच्चपलाः चञ्चलाः । क्षणध्वंसिनः क्षणिका इति यावत् । स्तोकानि अल्पानि एव दिनानि कतिपयदिनपर्यन्तस्थायि यौवनसुखम् । प्रियेषु प्रीतिरस्थिरा । निखिलं संसारं असारमेव अनित्यमेव । बुद्ध्वा हे बुधा बोधकाः उपदेशकाः लोकानुग्रहे पेशलं चतुरं दक्षं वा तेन मनसा यत्नः समाधीयतां क्रियताम् । सर्वमनित्यमिति परिचिन्त्य सर्वेषामपि बुधानां स्वाचरणेन लोकोपकारकरणमेव उचितमिति तात्पर्यम् । तदुक्तं भगवद्गीतायां—
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥
इति । शार्दूल० वृत्तम् ॥

---

१ व्यापदः २ आत्मसात्तत् ३ लोल ४ सुदिनम ५ भोग, तुङ्गः तरङ्ग. ६ धुत्वाऽऽ-स्थिरा स्थिता, स्कूर्ति. स्थिरा स्थिता ७ मतः ८ बोधने

उक्तार्थ एवोपायं दर्शयति—

भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला
आयुर्वायुविघट्टिताभ्र[1]पटलीलीनाम्बुवद्भङ्गुरम् ।
लोला यौवनलालना[2] तनु[3]भृतामित्याकलय्य द्रुतम्
योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विधद्ध्वं बुधाः ॥३६॥

भोगाः सुखदु खादयः । मेघाना वितानं मण्डलं तन्मध्ये विलसन्ती या सौदामिनी विद्युत्तद्वत् चञ्चला अस्थिरा । आयु वायुना विघट्टिता विक्षिप्ता या अभ्रपटली मेघमंडलं तस्यां लीनं यदम्बु जलं तद्वत् भङ्गुरं क्षणिकं विनाशि । 'भञ्जभासमिदो घुरच्' इति घुरच् । तनुभृतां देहवतां यौवनस्य लालना पोषणं लोला अस्थिरा । यौवनलालसा इति पाठे यौवनसम्बन्धिनोत्युत्कटा भोगाभिलाषाः । कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा द्वयोः । इत्यमरः । इति पूर्वोक्तमाकलय्य निश्चयेन ज्ञात्वा । हे बुधा धैर्येण यो समाधि चित्तसमाधानं तस्य सिद्ध्या सुलभे योगे असंप्रज्ञातसमाधौ बुद्धिं विधद्ध्वं कुरुध्वम् । वृत्तं पूर्वोक्तम् ।

आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्री-
रर्थाः संकल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूगाः ।
कण्ठाश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः प्रणीतं
ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरीतुम् ३७

कल्लोलवल्लोलं चञ्चलं । कतिपयदिवसान् तिष्ठतीति तच्छीला । यौवनश्रीः यौवनसंपत्ति । अर्था विषयाः संकल्पेभ्यः ईषदूनाः संकल्पकल्पाः क्षणावस्थायिनः । ईषदसमाप्तौ कल्पब्देश्यदेशीयरः इति कल्पप्प्रत्ययः । घनसमये या तडित् तस्या इव विभ्रमा विलासा येषा ते भोगपूगाः भोगसमूहाः । तथा यत्प्रियाभि प्रणीतं दत्तं कण्ठस्याश्लेषो यस्मिन् कण्ठाश्लेषेण वा उपगूढमालिङ्गनं तदपि न चिरं स्थायि । अतः भवात् संसारात् यद्भयं तदेव अम्भोधिः । तस्य पार तरीतुं तरणार्थं ब्रह्मणि विषये आसक्तचित्ता नितरां सक्तचित्ता भवत । सर्वस्यानित्यत्वात्र ब्रह्मध्याननिरिक्त संसारतरण इष्टतमं साधनमित्यर्थः । एवं त्रिभिः श्लोकैः कल्याणपर्यवसायि ब्रह्मध्याननिष्ठोपदिष्ट । काव्यलिङ्गमलंकारः । स्रग्धरा वृत्तम् ।

---

१ अभ्र २ लालसा. ३ नळ्याचे ४ पूगाः.

अथ विचार्यमाणे संसारः कष्टमय एव न तस्मात्सुखप्राप्त्याशा इति प्रश्नद्वाराह—

कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भवासे
कान्ताविश्लेषदुःखव्यतिकरविषमो यौवने चोपभोगः ।
नारीणामप्यवज्ञा विलसति नियतं वृद्धभावोऽप्यसाधुः
संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किंचित् ३८

अमेध्यमध्ये कुत्सितमूत्रादिमध्ये । वसत्यस्मिन्निति वासः । गर्भवासे गर्भाशये नियमिततनुभिः मर्यादितदेहैः स्थीयते । यौवने कान्ताया विश्लेषः वियोगः तेन यत् दुःखं तस्य व्यतिकरेण सम्बन्धेन विषमः कठिन उपभोगः । यस्मिन्नियतं निश्चयेन नारीणां स्त्रीकर्तृका अवज्ञा अवमानना विलसति सः । वृद्धभावोऽपि असाधुः । अतः रे मनुष्या यदि संसारे किंचित् स्वल्पमपि सुखं अस्ति वदत । न किंचिदपि सुखमस्तीत्यर्थः । अतः संसारान्निवृत्य नित्यनिरतिशयानन्दप्राप्तिहेतौ ब्रह्मण्येव मनो निधत्तेति भावः । स्रग्धरा वृत्तम् ॥

विद्यमाने जराभये प्रतिदिनं क्षीयमाणे चायुषि नरा स्वहितं नाचरन्तीति चित्रमित्याह—

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति देहम् ।
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ ३९ ॥

जरा परितर्जयन्ती भीषयमाणा सती व्याघ्रीव अग्रे तिष्ठति । रोगाश्च ज्वरादयः शत्रव प्रतिपक्षियोद्धार इव देहं प्रहरन्ति अनेकप्रकारैः प्रहारान् कुर्वन्ति । भिन्नघटात् सच्छिद्रघटाद्यथा अम्भः जलं तथा आयुः परिस्रवति प्रतिक्षणं क्षरति । एवमपि लोकः प्राकृतो जनः अहितमकल्याणमाचरतीति चित्रमाश्चर्यम् । आगाम्यनर्थालोचनेनापि न स्वहितेऽभिनिवेशं कुरुत इत्याश्चर्यमित्यर्थः । उपमालंकारः । वसन्ततिलका ॥

---

१ म॰पे. २ विषमे यौवने विषयोग॰. ३ यामच्छीनामवद्याविहिमित्रमसर्ति॰.

अथास्मद्वचो यदि प्रमाणं तर्हि आत्मन्येव चेतः समाधेयमित्युपदिशति—

**भोगा मङ्गुरवृत्तयो बहुविधास्तैरेव चायं भव-**
**स्तत्कस्येह कृते परिभ्रमत रे लोकाः कृतं चेष्टितैः।**
**आशापाशशतोपशान्तिविशदं चेतः समाधीयतां**
**कामोच्छित्तिवशे स्वधामनि यदि श्रद्धेयमस्मद्वचः ॥ ४० ॥**

बहुविधा बहुप्रकारा भोगा मङ्गुरा मङ्गशीला वृत्तिर्येषां ते मङ्गुरवृत्तयः क्षणस्थायिन । तैरेव भोगै अयं भव संसार । कारणगुणा कार्येऽनुवर्तन्त इति न्यायेन संसारोऽपि विनाशीलर्थः । तस्मादे लोका इह लोके कस्य कृते कस्यार्थे यूयं परिभ्रमत भ्रमण कुरुत । कृतं चेष्टितं अल व्यापारै । ते न कर्तव्या इत्यर्थ । कृतमिति निवारणातिनिषेधयो इति गणव्याख्याने । आशायाः पाशा. तेषा शतानि तेषामुपशान्त्या विशद निर्मलं चेतः अन्त करणम् । यदि अस्मद्वच वचन श्रद्धेयं श्रद्धायोग्य तर्हि । कामानामुच्छित्या उच्छेदेन वशं स्वाधीन तस्मिन् । स्वधामनि स्वाधिष्ठाने समाधीयता स्थिरीक्रियताम् । बाह्यविषयेभ्यो निवर्त्यान्तरात्माभिमुख कृत्वेतिशेष । अत्र हितोपदेष्टा गुरु श्रद्धेयवचन एवेति सूचितम् । तेन च तस्मिन् श्रद्धया भक्त्या च तदुपदेशानुसारेणानन्यासक्तं मनो ब्रह्मणि नियुज्य श्रेय सम्पादनीयमिति तात्पर्यम् । शार्दूल वि० ॥

सर्वथा भोग एव इष्यते चेत्क्षुद्रभोगान्विहाय निरातिशयेऽनिर्वाच्ये ब्रह्मानन्दभोगे रतिं कुरु इत्युपदिशति—

**ब्रह्मेन्द्रादिमरुद्गणांस्तृणकणान्यत्र स्थितो मन्यते**
**यत्स्वादाद्विरसा भवन्ति विभवास्त्रैलोक्यराज्यादयः ।**
**भोगः कोऽपि स एक एव परमो नित्योदितो जृम्भते**
**भो साधो क्षणभङ्गुरे तदितरे भोगे रतिं मा कृथा ॥ ४१ ॥**

---

१ कस्यैव २ भ्रमथ ३ कामोत्पत्तिवशं-शात्. ४ अयं श्लोकोऽन्यथा पठ्यते कैश्चिद्यथा—त्रैलोक्याधिपतित्वमेव विरसं यस्मिन्महाशासने तल्लब्ध्वाशनवस्त्रमानघटने भोगे रतिं मा कृथा । भोगः (बोधः) कोऽपि. यत्स्वादादि. विषया.. इति द्वितीयतृतीयपादौ व्यत्ययेन । पादद्वयस्य टीका—यस्मिन् महाशासने शासयन इति शासनम् । उपनिषत्प्रतिपाद्यब्रह्मज्ञाने ब्रह्मणि वा अधिगते सति त्रैलोक्यस्य अधिपतित्वं विरसमेव नीरसमेव । तत् प्राप्य अशने च मानश्च ते घटना यस्य तेश वा घटना युक्तिर्यस्मिन् तस्मिन्भोगे रतिं प्रीतिं मा कृथा ।

यत्र यस्मिन्भोगे स्थितः । पुरुष इति शेषः । ब्रह्मेन्द्रावादी येषां ते ब्रह्मेन्द्राद्या देवसंघास्तानपि । का कथेतरेषाम् । तृणलवानिव तुच्छान्मन्यते । मन्यकर्मण्यनादरे विभाषाऽप्राणिषु । (२-३-१७) इति विकल्पाद् द्वितीया । यस्यास्वादादुच्चानुभवात् । त्रयो लोकास्त्रैलोक्यम् । ब्राह्मणादित्वात्ष्यञ् । तत्र यत्साम्राज्यं तदादि येषां ते विभवा विरसा रुचिहीना भवन्ति । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः । स तादृशः कोऽप्यनिर्वाच्य परमः सर्वोत्कृष्ट एक एव भोगो नित्योदितः सर्वदा प्रकाशरूपः । अभिनवरस इत्यर्थः । जृम्भते दन्भिगति । हे साधो सत्पुरुष । उपदेशार्हेति यावत् । तस्मादितरे क्षणभङ्गुरे विषयादिभोगे रतिं रागमासक्तिमित्यर्थः । मा कृथा मा कार्षीः । लुङि न माङ्योगे इत्यडागमनिषेधः । वृत्तं पूर्वोक्तम् ॥

अथ कालमहिमावर्णनम् ।

अथ सर्वस्य कालवशत्वात्तन्महिमानं वर्णयति । तत्रादौ कालः कलयतामहम् इति भगवद्वचनात्काल परमेश्वर एवेति मनसि कृत्वा तस्य सर्वनियामकत्वं च दर्शयन् तं नमस्करोति—

सा[1] रम्या नगरी महान्स नृपतिः सामन्तचक्रं च तत्
पार्श्वे तस्य च सा[2] विदग्धपरिषत्ताश्चन्द्रबिम्बानना ।
उत्सिक्तैः[3] स च राजपुत्रनिवहस्ते बन्दिनस्ताः कथा
सर्वं यस्य वशादगात्स्मृतिपथं[4] कालाय तस्मै नमः ॥ ४२ ॥

सा प्रसिद्धा पूर्वानुभूता वा । अत्र सर्वत्र तच्छब्दः प्रसिद्धार्थः पूर्वानुभूतविषयो वा । अतो न यच्छब्दापेक्षा । तदुक्तं काव्यप्रकाशे-प्रसिद्धानुभूतार्थगोचरस्तच्छब्दो न यच्छब्दमपेक्षते । इति । महान् साम्राज्यभारोद्वहनसमर्थः । तद्युवति तत् । सम्यगन्तः समन्तः तस्मिन्समन्ते भवः सामन्तः । माण्डलिक इति यावत् । तत्र भवः इति अण् । तेषां चक्रं समूहः । विदग्धानां विदुषां कर्तव्यार्थचतुराणां वा । परिषत् सभा । चन्द्रबिम्बवदाननं यासां ताः । उत्सिक्तो गर्वितः । उद्वृत्त इति पाठे उन्मार्गगामीत्यर्थः । स राजपुत्राणां निवहः समूहः । बन्दिनः स्तुतिपाठकाः । तस्य नृपतेः । का कथेतरेषाम् ।

---

१ रम्या सा, प्राज्ञः क्ष्मापतिः. २ सापि तत्रदरिष्य; सा विदग्धवनिता. ३ उद्रिक्तः स्यन्दनः; उद्वृत्त. ४ पदम्

इदं सर्वमपि यस्य कालस्य पलघटिकाप्रहरदिवसपक्षमासर्त्वयनसंवत्सरादिलक्षणस्य मृत्योर्वा वशाद् वशवर्तित्वात् स्मृतिपथं स्मरणपदवीम् । ऋक्पू-इत्यादिना समासान्तोऽच् प्रत्ययः । अगात् । अनुभवयोग्यताविरहाद्बुद्धेर्द्वितीयावस्थापन्नं संवृत्तमित्यर्थः । तस्मै नमः । शार्दूलवि० वृत्तम् ।

आदावक्षक्रीडासाम्येन कालचेष्टितं वर्णयति—

यत्रानेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते ।
इत्थं चेमौ रजनिदिवसौ दोलयन्द्वाविवाक्षौ
कालः काल्या भुवनफलके क्रीडति प्राणिशारैः ॥ ४३ ॥

गृहे सद्मनि फलककोष्ठे च । अनेके प्राणिनः शाराश्च । इत्थं उक्तप्रकारेण इमौ रजनिदिवसौ रात्रिंदिवसौ द्वौ अक्षौ पाशकाविव दोलयन् प्रक्षिपन् कालः काल्या स्वशक्त्या सह । भुवनमेव फलकं तस्मिन् । प्राणिन एव शाराः काष्ठनिर्मितद्यूतोपकरणानि । सोंगट्या इति प्राकृते प्रसिद्धिः । तैः क्रीडति । एकदेशवर्तिरूपकमुपमयाङ्गेन संसृष्टमलंकारः । उपमायामेव केवलायां भुवनं फलकमिव प्राणिनः शारा इव इत्युपमितसमासौ । मन्दाक्रान्ता ।

एवं कालकृतां हानिं दृष्ट्वापि मोहमापन्ना लोकाः स्वकर्तव्यं न जानन्तीत्याह—

आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं
व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥४४॥

गतागतैरस्तोदयरूपैः । अहरहः प्रत्यहं । जीवितमायुः । संक्षीयते क्षीणं क्षीणं भवति । बहवः कार्यभाराः । कार्यातिशया इति यावत् । तैर्गुरुभिर्व्यापारैः कियत्परिमाणः कालो गत इति न विशेषेण ज्ञायते । जन्म च जरा च विपत्तिश्च मरणं च दृष्ट्वा त्रासो जन्मादिजं भयं नोत्पद्यते । क्लेशपूर्णोऽयं जन्मादिकलापः । तत्र सुखलवाभावेऽपि सुखप्राचुर्यं प्रतीयते मूढैः । अत एव ते तद्धेतुविषयाकामकर्मसु विरतिं न कुर्वन्तीति भावः । एवं जगत् मोहमयीं मोहप्रचु-

१ अनेकः २ चान्ते न चैकः ३ नैवैः ४ लोल०. ५ कल्पः. ६ सह बहुकल . ७ काष्ठपि. ८ वियोग.

○

रां । प्राचुर्यार्थे मयट् टित्वाद् डाप् । प्रमाद एव मदिरा तां पीत्वा प्रास्य उन्मत्तभूतं कर्तव्याकर्तव्यविचारशून्यं जातमिति भावः । एतदादिश्लोकपञ्चकस्य शार्दूल० वृत्तम् ।

उक्तमेवार्थं प्रकारान्तरेण वर्णयति—

रात्रिः सैव पुनः स एव दिवसो मत्वाबुधा जन्तवो
धावन्त्युद्यमिनस्तथैव निभृतप्रारब्धतत्तत्क्रियाः ।
व्यापारैः पुनरुक्तभुक्तविषयैरेवंविधेनामुना
संसारेण कदर्थिताः कथमहो मोहान्न लज्जामहे ॥ ४५ ॥

अबुधा इति च्छेदः । अबुधा मूर्खा जन्तवः प्राणिनः । रात्रिदिवसौ तावेवेति मत्वा । न तु आयुर्हरत्वेन दृष्टेत्यर्थः । उद्यमिनः उद्योगवन्तः । तथैव पूर्ववदेव निभृतं निगूढं यथा स्यात्तथा प्रारब्धास्तास्ताः क्रिया इष्टार्थसाधककर्माणि यैः तथाभूताः । पुनरुक्तं यथा स्यात्तथा भुक्ता विषया येषु तैर्व्यापारैश्चेष्टाभिः । अमुना एवंविधेन निर्वेदहेतुना संसारेण कदर्थिता दुःखिताः । कुत्सितार्थः कदर्थः । को कत्तत्पुरुषेऽचि । इति कुशब्दस्य कदादेशः । कदर्थवन्तः कृताः । कदर्थशब्दात्तत्करोति इति ण्यन्तात्कर्मणि क्तः । णाविष्टवद्भावे विन्मतोर्लुक् । कथं न लज्जामहे लज्जास्थानेऽपि न लज्जामहे इति आश्चर्यम् ॥

धर्मार्थकाममोक्षाणां पुरुषार्थानां साधनेषु परमेश्वराराधनधर्मानुष्ठानविद्योपार्जननार्यावाहयकालिङ्गनादिष्वेकमपि नास्माकं सिद्धमिति शोचतां मनोवृत्तिं वर्णयति त्रिभिः—

न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये
स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥ ४६ ॥

विधिवत् विध्यर्हम् । शास्त्रोक्तरीत्येत्यर्थः । तदर्हम् इति वतिप्रत्ययः । संसारविच्छित्तयेऽपुनर्भवायेश्वरस्य जगन्नियामकस्य पदं न ध्यातमेकाग्रमनसा चिन्तितम् । अनेन मुमुक्षाभावः सूचितः । ईश्वरस्य शंकरस्य वा । कचं करे दृढानुरागत्वात् ।

---

१ मुधा २ मुक्त० भुक्त ३ ईर्ष्यवि० ४ वयम् ५ जानीमहे ६ कपाट ७ नारी०

तदुक्तं ब्रह्माण्डपुराणे—स्वराडाख्यस्य देवस्य हृदयाम्भोजमध्यमे । उमासहायो भगवान्नीलकण्ठस्त्रिलोचनः ॥ यो नृत्यत्यमौ नित्यं परमानन्दचिद्धनः । तं दृष्ट्वा मनुजः सर्वो विमुक्तो भवतीति हि ॥ इति । अथ ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यादिश्रुतेः धर्मस्य ज्योतिष्टोमादेः साक्षात्परम्परया च स्वर्गापवर्गसाधनत्वमुक्तं मीमांसायां तत्र द्वितीयं पक्षमाश्रित्याह—स्वर्गस्य द्वारं तस्य कपाटस्य पाटने उद्घाटने पटुः कुशलः समर्थो वा धर्मः । धर्मानुष्ठानजन्यं पुण्यमिति यावत् । नोपार्जितः । एतेन स्वस्य आमुष्मिकसुखानर्हत्वं दर्शितम् । रामाया वरस्त्रियाः पीनौ यौ पयोधरौ तयोरूर्वोश्च युगुलं युग्मं स्वप्नेऽपि नालिङ्गितम् । एतेन कामपुरुषार्थोऽपि न संपादित इति सूचितम् । ततश्चैहिकसुखाभावोऽपि निदर्शितः । किंतु केवलं मातुर्जन्मदाव्या यौवनवनच्छेदनविषये वयं कुठारा छेदनहेतवः संवृत्ताः । निरर्थकमेवास्माकं जन्मेति भावः ॥

नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भपीठदलनैर्नाकं न नीतं यशः ।
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत् ॥ ४७॥

भुवि इहलोके । वादिनां वृन्दं समूहं । प्रतिवादिपाण्डित्यगर्वमित्यर्थः । दमयतीति तथा । कृत्यल्युटो बहुलमिति कर्मकर्तरि ल्युट् । टित्वात् ङीप् । विनीतानां सुशिक्षितानां उचिता योग्या विद्या नाम नरस्येत्यादिदर्शितगुणवतीत्यर्थः । खड्गाग्रैः । करिणामरिगजानां यानि कुम्भपीठानि तेषां दलनं विदारणं । दलविदलने इति धातोः पूर्ववत् ल्युट् । नाकं स्वर्गम् । यशः कीर्तिः । कीर्तिं स्वर्गफलमाहुरासंसारं विपश्चितः । इह किंजन्म कीर्तिं विना । इत्यादि वचनैः दर्शितमाहात्म्यमित्यर्थः । कान्तायाः कोमलपल्लववद्यः अधरः तस्य रसः । अधरामृतमित्यर्थः । शून्यालये शून्यगृहे । अहो इति खेदे । गृहस्थावस्थायोग्यं न किंचिदपि मया कृतं धिक् मामिति तात्पर्यम् । तद्धितगा उपमा ॥

उक्तमेव पुनः स्पष्टयति—

विद्या नाधिगता कलङ्करहिता वित्तं च नोपार्जितं
शुश्रूषापि समाहितेन मनसा पित्रोर्न संपादिता ।

१ प्रतिवादि. २ सुधा पीता.

आलोलायतलोचना युवतयः स्वप्नेऽपि नालिङ्गिता
कालोऽयं परपिण्डलोलुपतया काकैरिव प्रेरितः ॥ ४८ ॥

कलङ्करहिता निर्मला । वेदादिप्रतिपाद्यार्थोपपत्तेरदर्थं । वित्तं भूयिष्ठार्थसाधनमपि । नोपार्जितं न संपादितम् । शुश्रूषा सेवा । समाहितेन मनसा शान्तान्तःकरणेन । मातापितृसमं दैवं सर्वेषां न हि विद्यते । तस्मात्संपूजयेन्नित्यं पितरौ देवमर्पणौ । इत्यादिवचनात्सेव्ययोरपि । आलोले चपले आयते दीर्घे च लोचने नयने यासां ताः । परपिण्डे परदत्तान्ने या लोलुपता आसक्तिः तया । प्रेरितः नीत इति यावत् । अत्र श्लोकत्रयेऽभिमतस्तृतीयपुरुषार्थः धर्माविरुद्ध एव ज्ञेयः । अन्यस्य वैराग्यविषये वक्तुमनर्हत्वात् । उक्तं च गीतायां–धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ इति ॥

अथ कालकृतां दुरवस्थामाह—

वयं येभ्यो जाताश्चिरपरिगता एव खलु ते
समं यैः संवृद्धाः स्मृतिविषयतां तेऽपि गमिताः ।
इदानीमेते स्मः प्रतिदिवससमासन्नपतना
गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ४९ ॥

येभ्यः पितृपितामहादिभ्यः । ते परिगता मृताः खलु । खलुशब्दो निश्चये वाक्यालंकारे वा । स्मृतिविषयतां स्मृतिगोचरतां गमिताः प्रापिताः । कालेनेति शेषः । गमेर्ण्यन्तात्कर्मणि क्तः । इदानीं वार्धक्यावस्थायाम् । आसन्नमुपस्थितं पतनं येषां ते । सिकताः सन्त्यस्मिन्देशे इति सिकतिलः । 'देशे लुबिलचौ च' इति इलच् प्रत्ययः । एवंविधं यन्नद्यास्तीरं तत्र तरवस्तैः वृक्षरवद्भिः सह तुल्यावस्थां समदशां गताः । यथा तरवः सिकतापनये तेषां पात आकस्मिकस्तथास्माकमपीति भावः । शिखरिणी ॥

अथ नराणामायुषः कष्टमयत्वं शोचति—

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः ।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम् ॥ ५० ॥

---

१ स्तिमिता– २ प्रवेशे. ३ स्मृतिपथगता, चिरपरिचिता– ४ संवृत्ता. ५ स्मशानस्थिताम्.
६ विदिशं ७ वृद्धत्वे.

तस्यार्धस्य पञ्चविंशतिसंख्याकस्यार्धं सार्धद्वादशसंख्याकं बाल्ये परस्यार्धस्य चापरमर्धं सार्धद्वादशवर्षाणि वृद्धत्वे इत्यर्थः । शेषं अवशिष्टं पञ्चविंशतिवर्षसंख्याकमायु. व्याधिश्च वियोगश्च तयो. दुःखेन सहितं सेवादिभिश्च नीयते । तस्मात् प्राणिनां वारितरङ्गवत् चञ्चलतरे अतिचपले जीवे आयुषि सौख्यं कुतः । नास्ति सुखगन्धोऽपीत्यर्थ. । शार्दूल वि० ॥

अथ बाल्याद्यवस्थाक्रमेण नरो मृत्युवशं गच्छतीत्याह—

क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः ।
जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनु-
र्नरः संसारान्ते विशति यमधानीजवनिकाम् ॥ ५१ ॥

क्षणमिति परिच्छिन्नकालवाचक । कंचित्कालमित्यर्थ. । काम्यन्तेऽभिलष्यन्ते इति कामा विषयास्तेषु रसिक अभिज्ञ. । संपूर्णः विभवो धनं यस्य स. । जरया जीर्णानि अङ्गानि तैः । नट इव नटवत् । वलीभिः त्वक्चर्मभङ्गैर्मण्डिता भूषिता तनु देह. यस्य स नर. संसारान्ते मरणानन्तरं यमस्य मृत्यो धानी नगरी सैव जवनिका तिरस्करिणी । 'पडदा' इति भाषायां । तां विशति । मनुष्यस्य कुशलनटवदिह संसारे आचरणं भवतीत्यर्थः । शिखरिणी ॥

अथ यतिनृपतिसंवादः ।

इदानीमैहिकवैभवस्य तुच्छत्वं वैराग्यस्य च महत्त्वं दर्शयितुं यतिनृपसंवादं प्रस्तौति ।

त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः
ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः ।
इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं
यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निस्पृहाः ॥ ५२ ॥

रञ्जयतीति राजा । उपासित. सेवितो यो गुरुस्तस्माल्लब्धा या प्रज्ञा कार्याकार्यविवेकविषया बुद्धिस्तस्या अभिमानेनोन्नता लब्धोत्कर्षा वयम् । त्वं विभवैः ऐश्वर्यै ख्यात. । नोऽस्माकं यशांसि एते आचार्यकृपया लब्धपरमार्थज्ञानमहामान-

मानधनाविं०.

सम्पत्योन्नता इत्येवंरूपाणि कवयः काव्यकारा दिक्षु दशसु प्रतन्वन्ति प्रकर्षेण विस्तारं प्रापयन्ति । एवंप्रकारेण हे मानद शत्रूणां मानं द्यति खण्डयतीति तत्संबुद्धिः । आवयोरुभयोरप्यन्तरं भेदः नातिदूरं अतिशयेन न विद्यते । यदि त्वमस्मासु पराङ्मुखः आदरवर्जितस्तर्हि वयमपि । त्वयीतिशेषः । एकान्ततः निस्पृहाः । अत्यन्तनिस्पृहत्वान्नादरापेक्षा अस्माकम् । शार्दूल० ॥

उक्तमेवार्थं विशदीकरोति—

अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदर्थं
शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं नः ।
सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामा
मय्यप्यास्था न चेत्तत्त्वयि मम सुतरामेष राजन्गतोऽस्मि ५३

हे राजन् त्वं द्रव्यस्येश्वरोऽसि वयमपि च गिरामीश्वराः स्म । यावदर्थं यावानर्थस्तावत् । वादिनां दर्पः गर्व एव ज्वरस्तस्य शमनविधौ नः अस्माकं अक्षयमखण्डितं पाटवं पटुता । धनाढ्याः धनिनः । धनान्धा इति पाठे धनेन धनार्थं वा अन्धा धनान्धाः । धनप्राप्त्या धनप्राप्त्यर्थं वा कार्याकार्यविचारनिरपेक्षा इत्यर्थः । मतेः मलः मतिमलो बुद्धिमान्द्यमित्यर्थः । तस्य हतये क्षयार्थम् । श्रोतुकामाः श्रवणेच्छावन्तः । तुङ्काममनसोरपि इति तुमुनो मकारलोपः । मय्यास्था न चेत्तदा त्वय्यपि मम सुतरां नास्त्येव गतोऽस्मि इदानीम् । यतः निःस्पृहत्वात्तृणीकृतसर्वसारः । स्रग्धरा ॥

तृष्णोपरमात्सुसंतुष्टान्तःकरणा वयमेव सर्वत्र सुखसंचारा इत्याह—

वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः
सम इह परितोषो निर्विशेषो विशेषः ।
स तु भवतु दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥ ५४ ॥

इह अस्मिन् लोके । दुकूलैः क्षौमैः । उभयोर्मध्ये निर्विशेषः निर्गतो विशेषो भेदो यस्मात् स तथा विशेषः उत्कर्षः । उभावपि समं सन्तुष्टाविति यावत् । वि-

---

१ त्रिमहे २ दिवम् ३ वाग्मि ४ शूर ५ मदान्धा धनान्धा ६ मतिविमलधिय.. ७ न चेत्सा त्वयि, न ते चेत्त्वयि मम नितरामेव राजन्ननास्था ८ च लक्ष्म्या- ९ इव, परितोषो जायते को १० भवति

शाला विपुला । मनसि परितुष्टे सति न कोपि दरिद्रः न कोऽपि धनवान् । मनःसंतोषभावाभावाभ्यामर्थवत्त्वदरिद्रत्वादिव्यपदेशा भवन्तीत्यर्थः । मालिनी ॥

अतएव प्राणयात्रार्थं विद्यमानान्यसाधना न दुर्जनानामविनयं सहामहे इत्याह—

फलमलमशनाय स्वादु पानाय तोयं
शयनमवनिपृष्ठं वल्कले वाससी च ।
नवधनमधुपानभ्रान्तसर्वेन्द्रियाणा-
मविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ ५५ ॥

फलमशनाय शरीरधारणप्रयोजनभोजनार्थमलं पर्याप्तम् । पानाय तृषाद्यान्यर्थं स्वादु निर्झरनिष्यन्दि तोयं जलम् । अलमिति वक्ष्यमाणेष्वप्यनुकर्षणीयम् । अवनिपृष्ठं भूतलं शयनं वल्कले च वाससी व्यावहारिकलज्जास्थानाच्छादने । नवं च तद्धनं च तदेव मधु मद्यं तस्य प्राशनेन भ्रान्तानि सर्वेन्द्रियाणि येषां तेषां दुर्जनानामविनयमौद्धत्यमनुमन्तु नोत्सहे । मालिनी ॥

इममेवार्थं प्रकारान्तरेणाह—

अशीमहि वयं भिक्षामाशावासो वसीमहि
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥ ५६ ॥

वयं भिक्षां अशीमहि अद्मः । आशा दिश एव वासः अम्बरम् । मह्याः पृष्ठे भूतले । ईश्वरैः धनाढ्यैः । नास्त्यस्माकं तैः किंचिदपि प्रयोजनम् ॥

अथ किं राजदर्शनेन । न तदभिमतः कोपि गुणोऽस्माकमित्याह—

न नटा न विटा न गायका न परद्रोहनिबद्धबुद्धयः ।
नृपसद्मनि नाम के वयं कुचभारानमिता न योषितः ॥ ५७ ॥

नृपस्य सद्म तस्मिन् वयं के नाम । न केपीत्यर्थः । येनास्माकं तत्र प्रवेशो भवेत् । वयं न नटा. वेषधारिणो नाट्यकर्मकुशला । न विटा एकविद्या नायकानुचरभेदा. । तदुक्तं—किंचिद्गुन. पीठमर्द एकविद्यो विटः स्मृतः । संधानकुशलश्चेटो हास्यप्रायो विदूषक ॥ इति । गायन्तीति गायकाः संगीतकुशला. । गायना इति पाठे ण्युट् च इति साधु । परेषां द्रोहः परद्रोह. तस्मिन्निबद्धा

१ क्षितिरपि शयनार्थं वाससे वल्कलं च. २ अदनीमहि ३ गायनाः ४ न च सत्येतरपक्षरतिन ; धर्मेतरवादनुभ्रमत., ५ सद्मनि; नृपमी-नृप वी-क्षितुमत.

बुद्धिर्येस्ते । यतस्त एव राज्ञां प्रिया । सभ्येतरेति पाठे सभायां साधवः सभ्याः । तत्र साधुरिति यत्प्रत्ययः । तेभ्य इतरे साधारणजनमनोरञ्जनमात्रकुशला इत्यर्थः । न तु शास्त्रार्थवादिनः । तेषां वादविंस्ताः भुवय । तेन वित्तश्रुभुपूर्वणर्थी । इति घुञ्प्रत्ययः । कुचभारेण नमिता योषितोऽपि न । नटत्वादिविशेषगुणविशिष्टत्वाभावादस्मादृशानां राजद्वारि प्रवेशोऽपि दुर्लभः । वैतालीयाख्यं वृत्तम् ॥

> विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं पुरा
> विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा ।
> इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
> कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ ५८ ॥

विपुलं उदारं हृदयं अन्तःकरणं येषां तैः उदारबुद्धिभिः कैश्चित् धन्यपुरुषैः प्रजापतिभिः पुरा सृष्ट्युत्पत्तिकाले जगज्जनितमुत्पादितम् । अपरैर्विष्ण्वादिपालयितृभिः विधृतं पालितम् । अन्यैः परशुरामादिभिर्विजित्य तृणं यथा तृणमिव द्विजादिभ्यो दत्तम् । अन्ये बलिप्रमुखा धीराः । इह हि इदानीमपि चतुर्दश भुवनानि भूरादीनि । तथापि कतिपयानां परिच्छिन्नसंख्याकानां पुराणां स्वाम्ये स्वामित्वे क एष मदज्वरः दर्पः । तेषामयं महान् दर्पोऽप्रयोजक इत्यर्थः । तैस्तत्तनं भवितव्यमित्यर्थः । हरिणी वृत्तम् ।

> अभुक्तायां यस्यां क्षणमपि न यातं नृपशतै-
> र्भुवस्तस्या लाभे क इव बहुमानः क्षितिभुजाम् ।
> तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो
> विषादे कर्तव्ये विदधति जडाः प्रत्युत मुदम् ॥ ५९ ॥

नृपाणां शतैः यस्यां क्षणं क्षणपरिमाणं कालमपि अभुक्तायां सत्यां न यातं किंतु असंख्या नृपतयः यां भुक्त्वैव गताः । तस्या लाभे राज्ञां क इव को नाम बहुमानः स्यान्न कोऽपीत्यर्थः । सर्वसाधारण्यात् । किंतु तस्या अंशस्यापि अंशे तथा तस्यांशांशस्याप्यवयवलेशे ये पतयः इति विषादे कर्तव्ये । अन्योपभुक्तस्य तत्रापि तुच्छस्य तस्य गर्ह्यत्वात् । जडा अविवेकिनः प्रत्युत विपर्ययेण मुदं विदधति । अहो एषां विचारमूढता । शिखरिणी ॥

---

१ मनिभिः धैर्यैः. २ श्रीम. ३ जनम् ४ क्षितिभृताम् ५ दैन्यार्थस्य.

आस्तां तावत्क्षुद्रनृपाभिमानः । तद्याच्ञापरास्त्वतीव गर्ह्या इत्याह—

मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं नन्वणुः
स्वांशीकृत्य स एव संयुगशतै राज्ञां गणैर्भुज्यते ।
नो दद्युर्ददतेऽथवा किमपि ते क्षुद्रा दरिद्रा भृशं
धिग्धिक्तान्पुरुषाधमान्धनकणान्वाञ्छन्ति तेभ्योऽपि ये ॥ ६० ॥

सर्वोऽप्ययं मृत्पिण्डो पृथ्व्याख्यः जलरेखया समुद्रेण वलयित. ननु अणुरल्पु परिच्छिन्नः । तथापि स एव राज्ञां गणै. समूहैः संयुगशतै. हिंसाप्रचुरयुद्धशतैः स्वांशीकृत्य स्वत्वापादनेन भुज्यते । ते पृथ्व्येकदेशप्राप्त्यर्थमनेकप्राणिघातका राजान. किमपि नो दद्युः पूर्वमधुना वा न किंचिद्ददते । यद्वा नो दद्यु' किंचिदत्यल्पं ददते वा । अत एव क्षुद्रा नीचा दरिद्राश्च सन्ति । तथापि तेभ्योऽपि ये धनकणान् । बहुदानृत्वाभावान् । वाञ्छन्ति तान्पुरुषाधमान् धिक् धिक् । तुच्छताद्योतिका वीप्सा । धिग्निर्भर्त्सननिन्दयोरित्यमर' । उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीया-इत्यादिना द्वितीया । शार्दूल॰ ॥

किंबहुना । तस्यैव जन्म सफलमन्ये वृथाभिमानहता इति निगमयति—

स जातः कोऽप्यासीन्मदनरिपुणा मूर्ध्नि धवलं
कपालं यस्योच्चैर्विनिहितमलंकारविधये ।
नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना
नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ ६१ ॥

कोऽप्यनिर्वचनीयमहिमा । मदनरिपुणा शंकरेण । यस्य कपालं शिरोऽस्थि । अलंकारविषये अलंकारविधानार्थं शिरसि निहितम् । तस्य सफलं जन्म इति भावः । प्राणत्राणे जीवितरक्षणे प्रवणा नम्रा पट्वी बुद्धिर्येषा तैः नमद्भिः कैश्चित्पुरुषैः हेतुना कोऽयं पुंसा गर्व. । अत्यन्तमयोग्य इत्यर्थः । मरणानन्तरमपि यस्य कपालं भगवता शिवेन शिरसि निहितं स एव धन्योऽन्ये निष्फलजन्मानो क्षुद्रा एवेति भाव । शिखरिणी वृत्तम् ॥

---

१ परिच्छ'. २ मर्ईीकृत्य, भागीकृत्य; उभेव संगरशतै राज्ञां गणा भुञ्जते. ३ दद्युर्ददतेऽथवा न किमपि–किमपरं–क्षुद्रा. ४ भुजाद्यः. ५ प्रवण.

अथ मनःसम्बोधनपद्धतिः ।

इदानीमन्येषां प्रसादनान्मनःप्रसादस्योत्कर्षं प्रतिपादयन्मनःसंबोधनपूर्वं तन्नियमनप्रकारमाह—

परेषां चेतांसि प्रतिदिवसमाराध्य बहु हा
प्रसादं किं नेतुं विशसि हृदय क्लेशकलिलम् ।
प्रसन्ने त्वय्यन्तः स्वयमुदितचिन्तामणिगुणे
विमुक्तः संकल्पः किमभिलषितं पुष्यति न ते ॥ ६२ ॥

हे हृदय । परेषां धनिनाम् । प्रत्यहं बहु अधिकप्रमाणेन आराध्य संसेव्य । हेति खेदे । प्रसादं नेतुं प्रसन्नानि कर्तुं क्लेशकलिलं क्लेशाढ्यं यथा स्यात्तथा किं विशसि । स्वयं स्वतंत्रतया उदिता उद्गता चिंतामणेः गुणा यस्मिंस्तस्मिन् । त्वयि अन्तः प्रसन्ने । विमुक्तस्तृष्णाया निर्गतः संकल्पः । ते किमभिलषितं वाञ्छितं न पुष्यति संपादयति । सर्वमपि पुष्येदित्यर्थः । तस्मात् पुरुषेण प्रयत्नतः परप्रसादनकरणं विहाय स्वान्तःकरणप्रसादनार्थं प्रयतितव्यमिति भावः । शिखरिणी ॥

एवं मनःप्रसादफलमुक्त्वा तस्यैकत्र नियमनमाह—

परिभ्रमसि किं मुधा क्वचन चित्त विश्राम्यतां
स्वयं भवति यद्यथा भवति तत्तथा नान्यथा ।
अतीतमपि न स्मरन्नपि च भाव्यसंकल्पय-
न्नतर्कितगमागमाननुभवस्व भोगानिह ॥ ६३ ॥

हे चित्त किं वृथा व्यर्थं परितः भ्रमसि । क्वचन यत्र कुत्रापि । स्वस्थान एवेति यावत् । विश्राम्यताम् । तत्र हेतुः स्वयमित्यादि । स्वयं प्रकृतितः यद्यथा भवति तत्तथैव भवति न तु अन्यथा कदापि भवति । अतीतमपि न स्मरन्नपि च भावि असंकल्पयन्नचिन्तयन् । अतर्किताः गमागमा येषां तान् अनिश्चितोत्पत्तिविलयानिति यावत् । भोगान् इह संसारे अनुभवस्व । हे चेतः यदृच्छालाभसंतुष्टं भव येनेश्वरप्रसादः स्यादित्यर्थः । तदुक्तं श्रीमद्गीतायाम्—'यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति । शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥' इति । पृथ्वी ॥

१ बहुधा. २ कल्मिष, क्लेशमफलम्. ३ निविश. ४ मुधा. ५ स्मरन्ननुस्मरन्, ६ अतर्कितगमागमाननुभवामि भोगानहम् ।

उक्तमेव स्पष्टयन्नाह—

एतस्माद्विरमेन्द्रियार्थगहनादायासकात्[1] आश्रय
श्रेयोमार्गमशेषदुःखशमनव्यापारदक्षं क्षणात् ।
[2]शान्तं भावमुपैहि संत्यज निजां कल्लोललोलां गतिं[3]
मा भूयो भज भङ्गुरां भवरतिं चेतः प्रसीदाधुना ॥ ६४ ॥

हे चेतः एतस्मात् सर्वानुभवसिद्धात् । आयासं त्रासं करोतीति आयासकं तस्मात् । इन्द्रियाणां ज्ञानकर्मेन्द्रियाणामर्थाः विषयाः शब्दस्पर्शादयः आदानग्रहणादयश्च त एव गहनं वनं तस्मात् विरम निवर्तस्व । विषयेषु अनर्थकारिषु मा प्रवृत्तं भूः इति भावः । क्षणात् सपदि अशेषाणि च तानि दुःखानि आध्यात्मिकादीनि तेषां शमनव्यापारे दक्षं चतुरं श्रेयोमार्गं मोक्षमार्गं आश्रय । तदेवाह— शान्तं शमप्रधानं भावं वृत्तिविशेषमुपैहि प्राप्नुहि । समाहितं भवेत्यर्थः । कल्लोलवत् महातरंगवत् लोलां चञ्चलां गतिम् । भङ्गुरां विनाशशीलाम् । भवे संसारे रतिं आसक्तिस्तां मा भज सेवस्व । प्रसीद प्रसन्नं भव । प्रसादमन्तरेण श्रेयःप्राप्त्यसंभवादिति भावः । शार्दूल० ॥

अधुना कर्तव्यं निर्दिशति—

मोहं मार्जय[4] तामुपार्जय रतिं चन्द्रार्धचूडामणौ
चेतः स्वर्गतरङ्गिणीतटभुवामासङ्गमङ्गीकुरु ।
को वा वीचिषु बुद्बुदेषु च तडिल्लेखासु[5] च स्त्रीषु च
ज्वालाग्रेषु च पन्नगेषु च सरिद्वेगेषु[6] च प्रत्ययः ॥ ६५ ॥

हे चेतः मोहं धनपुत्रादिष्वासक्तिरूपं दोषं मार्जय क्षालय । तां प्रसिद्धां परमसुखानन्ददायिनीमिति शमर्पि । चन्द्रार्धः चंद्रकला चूडामणिः शिरोभूषणं यस्य तस्मिन् शिवे रतिं प्रीतिमुपार्जय संपादय । स्वर्गतरङ्गिण्याः गंगायाः तटसंबन्धिन्यो या भुवस्तासामासङ्गं समागमम् । वीचिषु जलतरङ्गेषु बुद्बुदेषु जलविकारेषु तडिल्लेखासु विद्युल्लतासु स्त्रीषु ज्वालाग्रेषु अग्निशिखाग्रेषु सर्पेषु नदीवेगेषु च को वा प्रत्ययः विश्वासः । न कोऽपीत्यर्थः । वृत्तं शार्दूल० ॥

१ आयासकादाशु च, २ स्वान्तं. ३ मतिम्. ४ मार्जयन्नाम् ५ तडिल्लेखासु च धीषु, तडिल्लेखासमश्रीषु च ६ भुजङ्गेषु

पुनः प्रकारान्तरेण संबोधयति—

चेतश्चिन्तय मा रमां सकृदिमामस्थायिनीमास्थया
भूपालभ्रुकुटीकुटीविहरणव्यापारपण्याङ्गनाम् ।
कन्थाकञ्चुकिताः प्रविश्य भवनद्वाराणि वाराणसी-
रथ्यापङ्क्तिषु पाणिपात्रपतितां भिक्षामपेक्षामहे ॥ ६६ ॥

हे चेत सकृदपि आस्थया आदरपूर्वकं इमां अस्थायिनीं क्षणभङ्गुरां रमां लक्ष्मीं मा चिन्तय । कथंभूता पुनः सा रमेत्यत आह भूपालेति । भूपालानां भ्रुकुटी एव कुटी गृहं तत्र विहरणमेव व्यापारः तत्र पण्याङ्गना ताम् । पण्याङ्गनारूपेण विहारेऽनियन्त्रितत्वं द्योत्यते । कन्थाकञ्चुकिताः कन्थया कञ्चुकिनाः संजातकञ्चुकाः । कन्थाकृतगात्रावरणा इत्यर्थः । सन्तः वयं वाराणस्यां या रथ्या मार्गाः तासां पङ्क्तिषु भवनद्वाराणि गृहद्वाराणि प्रविश्य पाणिः एव पात्रं तस्मिन् पतितां भिक्षां अपेक्षामहे इच्छाम इत्यर्थः । पाणिपात्रं उदरमात्रपात्रे पतितमश्नीयादिति श्रुतेः । शार्दूल० ॥

संसारे वक्ष्यमाणा सामग्री स्याच्चेत्तत्राभिनिवेशो युक्तः । अन्यथा निर्विकल्पे समाधौ स श्रेयानित्याह—

अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः
पृष्ठे लीलावलयरणितं चामरग्राहिणीनाम् ।
यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं
नो चेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ ६७ ॥

अग्रे सम्मुखे गीतं गायनम् । पार्श्वतः उभयतः दाक्षिणात्याः । दक्षिणदेशे भवाः । दक्षिणापश्चात्पुरसस्त्यक् ( ४-२-९८ ) इति त्यक्प्रत्ययः । सरसाः उत्तमाः रसिका वा कवयः । तेषामेव विचित्रवस्तुप्रबन्धनिर्माणपाठादिरिति भावः । चामरग्राहिणीनां वायुव्यजनवाहिनीनां लीलया चलतां करप्रकोष्ठभूषणानां रणितं क्वणितम् । वीजनव्यापारे इति शेषः । भवरसस्य संसाररसस्य आस्वादने । लम्पटत्वं लालसां कुरु । लोलुपो लोलुभो लोलो लालसो लम्पटश्च सः । इति यादवः । एवं न स्याच्चेत् सहसा संभ्रमेण निर्विकल्पे ध्येयरूपविकल्पवर्जिते असंप्रज्ञातसमाधौ । यत्र ध्येयस्फुरणमपि विलीयते स्वस्फुरणमात्रं चावशिष्यते । मन्दाक्रान्ता ॥

---

१ कुटीविहरण्या० २ कञ्चुकिनः० ३ पार्श्वयो ४ पश्चात्

अथ सम्यक्प्राप्त्यरिविजयादिकमकिंचित्करमेव नास्ति तस्मात्परमार्थलाभ इत्याह—

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
संमानिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥ ६८ ॥

सकलान् कामान् दुहन्तीति ताः श्रियः प्राप्ताः ततः किम् । न काचित्पुरुषार्थसिद्धिः । एवं सर्वत्र । विद्विषतां शत्रूणाम् । प्रणयिनः सेवकाः मित्राणि वा । विभवैः गजतुरगालंकारादिसंपत्तिभिः संमानिताः बहुमानिताः । तनुभृतां देहिनां तनुभिः शरीरैः । कल्पं 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । स्थितं । निरतिशयानन्दपर्यन्तं सर्वस्य सातिशयत्वात् अवश्यविनाशित्वाच्च । इतः श्लोकचतुष्टयस्य वसन्ततिलका वृत्तम् ॥

तर्हि किं श्रेयःसाधनमित्याह—

भक्तिर्भवे मरणजन्मभयं हृदिस्थं
स्नेहो न बन्धुषु न मन्मथजा विकाराः ।
संसर्गदोषरहिता विजना वनान्ता
वैराग्यमस्ति किमतः परमर्थनीयम् ॥ ६९ ॥

भवे शिवे । मरणं च जन्म च ताभ्यां भयं हृदिस्थं हृच्छयम् । बन्धुषु प्रणयिषु स्नेहः प्रेम । मन्मथजाः पुष्पधन्वनो जाता विकाराः चित्तदोषा अपि न । तेषां श्रेयःप्रतिबन्धकत्वात् । संसर्गदोषः कालुष्यं तेन रहिताः । कामक्रोधादिदोषवर्जिता इत्यर्थः । विजनाः निर्जनाश्च । वनान्ताः वनमध्यस्थानानि । वैराग्यं विरक्तिः । अतः परं वैराग्यात्परं किमन्यदर्थनीयं प्रार्थनीयमस्ति । न किंचिदपि । तस्यैव श्रेयःपरमसाधनत्वात् ॥

अथ वैराग्यसम्पन्नेन ब्रह्मचिन्तनपरेण भवितव्यं यतो ब्रह्मैकध्यानपरस्य भुवनाधिपत्यादयो भोगास्तुच्छा एव प्रतिभान्तीत्याह—

तस्मादनन्तमजरं परमं विकासि
तद्ब्रह्म चिन्तय किमेभिरसद्विकल्पैः ।

---

१ न्यस्तं. २ कण्टकिन्यः.. अन्न. । ३ तद्ब्रह्म दान्त्य जना यदि चेतनस्थाः

यस्यानुषङ्गिण इमे भुवनाधिपत्य-
भोगादयः कृपणलोकमता भवन्ति ॥ ७० ॥

यत एव ततः हे चेतः अनन्तं अन्तरहितं अनादित्वात् । अत एव अजरं जरारहितम् । यज्जायते तदेव अपक्षीयते ब्रह्म तु अजं अतः अजरमपि । परमं निरतिशयं विकासि प्रकाशरूपं सर्वव्यापि वा । विकासः सदा उदयः विद्यतेऽस्य नित्योदितमित्यर्थः । इति शर्मापि । तत् अज्ञानात्परोक्षकल्पमपि ब्रह्म सर्वमहत् चिन्तय । एभिः प्रत्यक्षमनुभूयमानैरपि असद्विकल्पैः वंध्यापुत्रवान्मिथ्याभावे किम् । एतेषां चिन्ता अनर्थकरीति भावः । यस्य ब्रह्मणः अनुषङ्गिणः अनुवर्तिनः इमे भुवनस्य आधिपत्यादिभोगाः । कृपणाः दीनाः । 'यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः' इति बृहदारण्यकश्रुतेः । 'कार्पण्यदोषोपहत' इति च गीतायाम् । ते च ते लोकाश्च तेषां मताः अभिमता भवन्ति। यथा कश्चित् मन्दोऽज्ञानात् राजानं विहाय राजपरतन्त्रमेव कंचित् सेवकं राजेति मत्वा तत्प्रसादनपरो भवति तथेति भावः । अत्र मतिबुद्ध्यादिना वर्तमानार्थे क्तप्रत्यये क्तस्य च वर्तमाने इति षष्ठीसमासनिषेधात्समासश्चिन्त्यः ॥

अथ ब्रह्मोन्मुखीकरणाय मानसमुपदिशन्निगमयति—

पातालमाविशसि यासि नभो विलङ्घ्य
दिङ्मण्डलं भ्रमसि मानस चापलेन ।
भ्रान्त्यापि जातु विमलं कथमात्मनीनं
तद्ब्रह्म न स्मरसि निर्वृतिमेषि येन ॥ ७१ ॥

हे मानस पातालमाविशसि नभो विलङ्घ्य यासि चापलेन दिङ्मण्डलं भ्रमसि। दूरे अगम्ये देशेऽपि तव अप्रतिहतं गमनं भवति । परंतु जातु कदाचित् भ्रान्त्यापि भ्रमवशेनापि । आस्तां तावद्विवेकेनेत्यर्थः । विमलं मलरहितं आत्मनीनं आत्मने हितं । 'आत्मविश्वजन०' इति खः । स्वोपकारकं तद्ब्रह्म कथं न स्मरसि येन स्मरणेन कृतेन निर्वृतिं मोक्षाख्यां निरतिशयां तृप्तिम् एषि प्राप्नोषि ॥

१ भ्रान्त्या. २ आत्मनीनम्. ३ न ब्रह्म संस्मरसि. ४ येन०.

अथ नित्यानित्यवस्तुविचारः ।

अथ केवलं वेदपठनस्मृतिपर्यालोचनशास्त्राध्ययनादिभिर्न कोपि लाभः । ब्रह्मप्राप्तिसाधनविचार एव श्रेयानित्याह--

किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः
स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः ।
मुक्त्वैकं भवबन्धदुःखरचनाविध्वंसकालानलं
स्वात्मानन्दपदप्रवेशकलनं शेषा वणिग्वृत्तयः ॥ ७२ ॥

वेदैर्ज्ञानकाण्डवर्जितैः । तदध्ययनेनेति यावत् । महान् विस्तरो येषां तैः शास्त्रैः न्यायसांख्यमीमांसादिभिः । स्वर्ग एव ग्रामकुटी पर्णगृहं तस्मिन्निवास एव फलं तद्ददद्भिः । कर्म अग्निहोत्रादि तस्य क्रिया अनुष्ठानं तस्य विभ्रमा विलासा तैः किम् । भवरूपबन्ध तेन यत् दुःख तस्य रचना घटना तस्या विध्वंसे नाशे कालानल प्रलयाग्नितुल्यं । स्वस्मिन्नात्मनि य आनंद तस्य यत्पदं स्थानं तस्मिन् य प्रवेश तस्य कलनं संपादनमेवैकं कर्म मुक्त्वा विहाय शेषाः अन्ये सर्वव्यापाराः वणिग्वृत्तयः । अत्यन्ततुच्छार्थसाधका इत्यर्थः । अत उपनिषदुपदिष्टमार्गेण ब्रह्मप्राप्तिरेव कर्तव्येत्यर्थः । शार्दूल॰वृत्तम् ॥

अतिमहतां मेर्वादीनामपि विनाशात्का कथा शरीरस्येत्याह—

यदा मेरुः श्रीमान्निपतति युगान्ताग्निनिहतः
समुद्राः शुष्यन्ति प्रचुरमकरग्राहनिलयाः ।
धरा गच्छत्यन्तं धरणिधरपादैरपि धृता
शरीरे का वार्ता करिकलभकर्णाग्रचपले ॥ ७३ ॥

यदा यस्मात् श्रीमान् महासमृद्धिमान् मेरु पर्वतविशेषः युगान्ते यः अग्निः तेन निहतः निपतति । विलीनो भवति । प्रचुरा ये मकरा ग्राहाश्च तेषां निलया गृहाणि एवंविधाः समुद्राः । यदेत्यनुकर्षणीयम् । शुष्यन्ति शुष्कीभवन्ति । धरणिधराणां पादैः धृता या धरा पृथ्वी सापि यदा अन्तं गच्छति । नश्यतीति यावत् । तदा तस्मात्कारणात् करिणो हस्तिनः कलभस्य शिशोः यत्कर्णाग्रं तद्वच्चपले । क्षणिके इति यावत् । शरीरे का वार्ता । तस्य तु अत्यन्तपरिच्छिन्नत्वात् सुतरां नाशः सिद्ध एवेति तात्पर्यम् । करिकलभेत्यत्र करिशब्दस्य विशेषप्रतिपत्तिहेतोर्वैशेष्यप्रतीत्यर्थत्वादपौनरुक्त्यम् । शिखरिणी ॥

---

१ दुःखनाश॰ २ शैवैर्वाणमृतिभि॰ ३ मतो. ४ वि॰ःदलितः. ५ निकर.

अथ जराकृतां दुरवस्थामाह द्वाभ्याम्—

गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलि-
र्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते।
वाक्यं नाद्रियते च बान्धवजनो भार्या न शुश्रूषते
हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते॥ ७४॥

गात्रं इन्द्रियं संकुचितं भुग्नम्। स्वविषयग्रहणासमर्थं जातमित्यर्थः। गतिः गमनशक्तिः। दन्तानां आवलिः पङ्क्तिः। दृष्टिः नेत्रेन्द्रियशक्तिः। वक्त्रं च लालायते लालाप्रचुरं वर्तते। दन्ताभावात्। बान्धवानां संबन्धिनां जनः समुदायः वाक्यं नाद्रियते। अवज्ञानादरं करोति। भार्या सहधर्मचारिणी पत्न्यपि न शुश्रूषते न सेवते। जीर्णं वयः यस्य स जीर्णवयाः तस्य। अमित्रवदाचरति। लालायते इत्यत्र कर्तुः क्यङ् सलोपश्च इति क्यङ्। अत्र तु उपमानादाचारे इति। उभयत्रापि अकृत्सार्वधातुकयोर्दीर्घः। इति दीर्घः। यावत् शरीरस्वास्थ्यं तावत्सर्वेऽपि सादरा भवन्ति। स्वदेहशक्तिक्षये तु न कोऽपि शब्दमात्रेणापि पृच्छतीति तात्पर्यम्। शार्दूलवि॰ वृत्तम्॥

वर्णं सितं शिरसि वीक्ष्य शिरोरुहाणां
स्थानं जरापरिभवस्य यदेव पुंसाम्।
आरोपितास्थिशकलं परिहृत्य यान्ति
चण्डालकूपमिव दूरतरं तरुण्यः॥ ७५॥

यदेव पुंसां पुरुषाणां जरया कृतः परिभवः तस्य स्थानं तं शिरसि शिरोरुहाणां केशानां सितं शुभ्रं वर्णं पलितमिति यावत्। वीक्ष्य दृष्ट्वा तरुण्यः स्त्रियः। वयसि प्रथमे इति ङीप्। आरोपितं अस्थिशकलं यत्र तं चण्डालकूपमिव तान् वृद्धान् परिहृत्य त्यक्त्वा दूरतरं अधिकदूरं यान्ति। इत्यहो कष्टं जरापरिभूतस्य जीवनम्। वसन्ततिः॥

अतो यावच्छरीरं क्षीणं न भवति तावदेव श्रेयःसम्पादनार्थं यत्नः कार्य इति सदृष्टान्तमाह—

यावत्स्वस्थमिदं शरीरमरुजं यावच्च दूरे जरा
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः।

१ दृष्टिर्वि २ स्वैर, वरे॰, वरा दुर्मानम्. ३ सकलम् ४ कम्बरपूर्व॰ ५ करजरा दूरत॰

आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महा-
न्प्रोद्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ ७६ ॥

स्वस्थं क्लेशाद्रहितम् । अविद्यमाना रुजा यस्य तदारोग्ययुक्तमित्यर्थः । इन्द्रियाणां शक्तिः स्वविषयग्रहणसामर्थ्यम् । अप्रतिहता अप्रतिबद्धा । अक्षीणेति यावत् । तावदेव । वेत्तीति विद्वान् । विदेः शतुर्वसु' इति वसुप्रत्ययः । तेन कर्तव्यं जानता पुरुषेण । आत्मनः श्रेयसि स्वकल्याणे निःश्रेयसावाप्तिलक्षणे । ननु चरमावस्थायां प्रयत्नं कर्तुं कः प्रत्यवाय इत्याकांक्षायां तस्याशक्यत्वमाह व्यतिरेकदृष्टान्तेन प्रोद्दीप्त इति । प्रोद्दीप्तेऽग्निना परीते । कीदृशः अकिंचित्कर इत्यर्थः । यावद्रोगजनितासमर्थ्या शरीरस्वास्थ्यं न प्रतिहतं तावदेव विवेकवता पुरुषेण निःश्रेयसार्थं प्रयतितव्यमिति भावार्थः । शार्दूलवि० ॥

अथ चपले जीविते किं सुखहेत्विति विकल्पमानस्य तप एव श्रेयोहेतुतयाचरितव्यमिति निश्चयमाह द्वाभ्याम्—

तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं
गुणोदारान्दारानुत परिचरामः सविनयम् ।
पिबामः शास्त्रौघानुत विविधकाव्यामृतरसा-
न्न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥ ७७ ॥

तपस्यन्तः तपश्चरन्तः । सन्तः । कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ( ३. १. १५. ) इति क्यङ्प्रत्ययः । तपसः परस्मैपदं च । सुरनदीं भागीरथीमधिनिवसामः तत्र वासं कुर्मः । 'उपान्वध्याङ्वसः' इति द्वितीया । किम् । उत अथवा गुणैः सौभाग्यसुशीलत्वादिभिः उदारान् रमणीयान् दारान् स्त्रीः सविनयं विनयेन सह यथा स्यात्तथा परिचरामः गृहधर्मेण भजामः । शास्त्राणामोघाः समूहास्तान् । उत विविधानि काव्यानि रामायणादीनि तेषु ये अमृतरसास्तान् पिबामः इति । जने । जातौ एकवचनम् । कतिपये निमेषा आयुर्यस्य तस्मिन् सति । अल्पायुष्यस्मास्वित्यर्थः । किं कुर्म इति न विद्मः न जानीम । शिखरिणी ॥

तत्र निश्चयमाह—

दुराराध्याश्चामी तुरगचलचित्ताः क्षितिभुजो
वयं च स्थूलेच्छा महति च पदे बद्धमनसः ।

१ हंदी०. २ सविनयात्. ३ शास्त्रार्थान्. ४ दुराराध्य. स्वामी ५ क्षितिभुजः. ६ तु. ७ सुमहति. ८ दत्त.

जरा देहं मृत्युर्हरति दयितं जीवितमिदं
सखे नान्यच्छ्रेयो जगति विदुषोऽन्यत्र तपसः ॥ ७८ ॥

दुःखेन आराध्याः । तुरगवत् अश्ववत् चलं चञ्चलं चित्तं येषां ते । क्षितिभुजः राजानः । स्थूला महती । दूराधिरोहिणीत्यर्थः । इच्छा येषां ते । महति पदे स्थाने बद्धं नितरां अर्पितं मनो येषाम् । जरा वार्धक्यं देहं हरति क्षिणोति । मृत्युः काल इव दयितमिष्टतमं जीवितमायुश्च हरति । अत हे सखे अस्मिन् जगति विदुषस्तपसः सर्वसाधकादन्यत्र तपोऽपहाय अन्यत् श्रेयः परं कल्याणं नास्ति । अतः सर्वथा तदेव सम्पादनीयमिति भावः । शिखरिणी ॥

अथ दुःखबहुले संसारे श्रेयोऽर्थं तपआचरणाय किं योग्यं स्थानमित्याकाङ्क्षायामाह—

माने म्लायति खण्डिते च वसुनि व्यर्थे प्रयातेऽर्थिनि
क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने ।
युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयः-
पूतग्रावगिरीन्द्रकन्दरदरीकुञ्जे निवासः क्वचित् ॥ ७९ ॥

माने जातिकुलाद्यभिमाने म्लायति गलिते सति । खण्डिते नष्टे सति । अर्थिनि अर्थोऽस्यास्तीति तस्मिन् याचके व्यर्थे विगतः अर्थः यथास्यात्तथा । कामम्नवाप्येत्यर्थः । प्रयाते प्रकर्षेण गते सति । क्षीणे कृशतां गते नष्टे वा । यौवने यूनः भावः तस्मिन् । सुधियां बुद्धिमतामेतदेव युक्तम् । किं तदित्याह जह्नोः कन्या गंगा तस्याः पयसा पूताः पुनीताः ग्रावाणो यस्मिन्नेवंविधस्य गिरीन्द्रस्य हिमवतः कन्दरस्य तटी तस्याः यः कुञ्जो लतामण्डपस्तस्मिन् । क्वचित् यत्र कुत्रापि निवासः इति यत्तद्योग्यमिति सम्बन्धः । एवंविधायां कष्टावस्थायां सर्वसंगपरित्यागं कृत्वैकदेशे स्थाने तपश्चरितव्यमिति तात्पर्यम् । शार्दूल० ॥

अथ जाते नित्यानित्यवस्तुविवेके सर्वमैहिकं रम्यं वस्त्वनित्यत्वेनोपहतमरम्यं प्रतिभातीत्याह—

रम्याश्चन्द्रमरीचयस्तृणवती रम्या वनान्तस्थली
रम्यं साधुसुहृत्समागमसुखं काव्येषु रम्याः कथाः ।
कोपोपाहितबाष्पबिन्दुतरलं रम्यं प्रियाया मुखं
सर्वं रम्यमनित्यतामुपगते चित्ते न किंचित्पुनः ॥ ८० ॥

---

१ सकलम् २ व्यर्थे ३ रम्य साधुसमागमः शमसुखम्. ४ साधुसमागमोद्भव—शम,सुख.

चन्द्रस्य मरीचयः मयूखाः । तृणमस्या अस्तीति तृणवती हरिततृणच्छन्ना वनान्तस्थली वनमध्यभूमिः । साधूनां सज्जनानां सुहृदां च समागमस्तस्य सुखं च रम्यम् । कोपेन प्रणयकलहादिषु उत्पादिता उत्पन्ना ये बाष्पबिन्दवः तैः तरलं भास्वरम् । बाष्पबिन्दवो यत्र तत्कोपो...न्दु च तत्तरलं चेति वा । एतत्सर्वं रम्यम् । चित्ते पुनः तु अनित्यतामुपगते सर्वमेतदनित्यमिति विवेकतां गते न किंचिद्रम्यं भाति ब्रह्मानन्द विनेति शेषः । वृत्तं शार्दूल० ॥

अधुना सद्भिरङ्गीकृता पदव्येवानुमर्तव्येति सूचयन्नुपसंहरति—

रम्यं हर्म्यतलं न किं वसतये श्रव्यं न गेयादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकं प्रीतये ।
किं तूद्भ्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कुर-
च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥८१॥

रम्यं रमणीयं हर्म्यतलं सौधोपरिभागो वसतये वसत्यर्थं रम्यं न किम् । अपि तु रम्यमेव । गेयादिकं गानादिकं । भव्यगेय-इत्यादिना कर्तरि निपातः । श्रवणयोग्यं श्रुतिसुखावहमित्यर्थः । न किम् । अथवा प्राणैः समा प्राणतुल्या प्रिया तस्याः समागमजन्यं सुखं प्रीतये अधिकं नैव किम् । सर्वमपि अस्ति । किंतु सन्तः सदसद्विवेकवन्तः उद्भ्रान्ताः भ्रममाणाः पतन्तश्च पतङ्गाः शलभास्तत्संबन्धी यः पवनः तेन व्यालोलः चञ्चलः दीपाङ्कुरः दीपकलिका तस्य छाया तद्वच्चञ्चलं अस्थिरं सकलमिति आकलय्य निश्चित्य वनमध्यं गताः । शाश्वतब्रह्मानन्दप्राप्त्यर्थं तपश्चरणायेति भावः । वृत्तं पूर्ववत् ॥

अथ शिवार्चनपद्धतिः ।

श्रेयःप्राप्त्यर्थं तपस आवश्यकत्वमुक्तम् । तत्किंप्रकारमित्याकाङ्क्षायामाभ्यन्तरं शिवार्चनमेवेष्टसिद्ध्यर्थं प्रशस्ततरमित्युपदिशति । तत्रादौ दुर्लभो मनोनिग्रहकारीत्याह—

आसंसारं त्रिभुवनमिदं चिन्वतां तात ताद-
ङ्नैवास्माकं नयनपदवीं श्रोत्रवर्त्मागतो वा ।
योऽयं धत्ते विषयकरिणीगाढगूढाभिमान-
क्षीबस्यान्तःकरणकरिणः संयमालानलीलाम् ॥ ८२ ॥

१ हर्म्य. २ सादर ३ मार्गो-मार्गम्. ४ मानाय.

तातेति आदरद्योतकम् । आसंसारं संसारमभिव्याप्य इदं त्रिभुवनं विन्वता- माल्लोकयतामस्माकं नयनयोः पदवीं मार्गं श्रोत्रयोः श्रवणयोर्वर्त्म मार्गं वा तादृक् तथाविधः पुमान् नागतः । न दृष्टो न श्रुतो वेति यावत् । यो विषया एव क- रिणी हस्तिनी तस्यां गाढं अत्यन्तं गूढं निभृतं योऽभिमानस्तेन क्षीबस्य मत्तस्य । क्षीबृ मदे इत्यस्य धातोः अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः (८-२-५५) इति निष्ठान्तो निपातः । मत्ते शौण्डोत्कटक्षीबाः । इत्यमरः । अन्तःकरणमेव करी हस्ती तस्य संयमः निग्रह एव आलानं गजबन्धनं तस्य लीलाम् । आनाय इति पाठे आनायस्य रज्जुनिर्मितबन्धनस्य लीलाम् । आनायः पुंसि जालं स्यात् इत्य- मरः । विषयैः बलवदाकृष्यमाणस्य दुर्दमस्यान्तःकरणस्य निग्रहे समर्थ इत्यर्थः । 'अत्रेदृक्पुरुषस्य नयनश्रोत्रपथविषयसंबन्धेऽप्यसंबन्धोक्त्या संबन्धे असंबन्धरूपा- तिशयोक्तिः । तया च मनोनियमनस्यात्यन्ताशक्यत्वरूपं वस्तु व्यज्यते । इत्य- लंकारेण वस्तुध्वनिः । तया च केनचिद्योगेन मनो नियम्य तत्र ब्रह्मानन्दसा- धनभूतान्तरङ्गशिवार्चनतपोऽवश्यं कर्तव्यमिति गूढोऽयमभिप्रायः । तथा अन्य- धर्मस्यान्यत्र संबन्धासंभवादानायलीलामिव लीलामित्यौपम्यपर्यवसानसमर्थवस्तु- संबन्धरूपो निदर्शनालंकारः । स चोक्तरूपकेणाङ्गाङ्गिभावेन संकीर्यते' । इति रामचन्द्रबुधेन्द्रः । मन्दाक्रान्ता वृत्तम् ॥

तप फलप्रकारमाह—

> यदेतत्स्वच्छन्दं विहरणमकार्पण्यमशनं
> सहार्यैः संवासः श्रुतमुपशमैकव्रतफलम् ।
> मनो मन्दस्पन्दं बहिरपि चिरस्यापि विमृशा-
> न्न जाने कस्यैषा परिणतिरुदारस्य तपसः ॥ ८२ ॥

स्वच्छन्दं यथा स्यात्तथा स्वेच्छया विहरणं विहारः । स्वच्छन्दं स्वाधीनं वा । अकार्पण्यं कृपणस्य भावः कार्पण्यं याच्ञादि दैन्यं । अविद्यमानं कार्पण्यं यस्मिंस्तथा अशनं भोजनम् । आर्यैः श्रेष्ठैः सह संवासः वसतिः । उपशमः शान्तिरेव एकं व्रतफलं यस्मिंस्तादृक् श्रुतं श्रवणम् । बहिः बहिर्विषयेषु । मनोऽपि मन्दः स्पन्दः स्पन्दनं यस्य तत् मन्दस्पन्दम् । अन्तर्मुखत्वात् । कीदृशस्य उदारस्य उत्कृष्टस्य तपसः एषा परिणतिः फलं परिणामो वा न जाने न वेद्मि । चिरस्य चिरकालं विमृशन्नपि । तच्च तपः शिवाराधनमेवेति भावः । शिखरिणी ॥

अथ किं कर्तव्यमिति विचार उपस्थिते स्मृत्वैव हरचरणाराधनमेव शरण-मित्याह—

जीर्णा एव मनोरथाः स्वहृदये यातं च तद्यौवनं
हन्ताङ्गेषु गुणाश्च वन्ध्यफलतां याता गुणज्ञैर्विना ।
किं युक्तं सहसाभ्युपैति बलवान्कालः कृतान्तोऽक्षमी
हा ज्ञातं स्मरशासनाङ्घ्रियुगलं मुक्त्वास्ति नान्या गतिः ८४

मनोरथाः संकल्पाः स्वहृदये एव जीर्णा नष्टाः । तत्तत्प्राप्तिहेतुविरहात् । तत् प्रसिद्धमुपभोगक्षमम् । हन्तेति खेदे । गुणज्ञैः गुणपरीक्षकैर्विना गुणाः विद्वत्त्वादयः वन्ध्यफलतां निष्फलत्वं याताः । बलवान् दुर्जयः कालः मृत्युः कृतोऽन्तो येन स कृतान्तः अक्षमी क्षमारहितः च सहसा वेगादभ्युपैति । एवं स्थिते किं युक्त-मुचितमाचरितुम् । स्मरणमभिनीयाह—हेति । ज्ञातमवगतम् । स्मरशासनः शंकरः तस्य अङ्घ्रियुगलं चरणयुग्मं मुक्त्वा विहाय अन्या गतिः शरणं नास्ति । शार्दूलवि० ॥

ननु शिवाय विष्णुरूपायेत्यादिवाक्येभ्यो हरिहरयोर्वस्तुत एकस्वरूपयोरपि रुचिवैचित्र्यात्पार्थक्येनैवोपास्यत्वं प्रतिपाद्यते । त्वयाप्युक्तमन्यत्र एको देवः केशवो वा शिवो वेति । एवं सति किमेतत्प्रलपितं शिवचरणयुगलं विहाय नान्या गतिरस्तीति इति चेद्वस्तुतस्तयोर्भेदो नास्ति । भक्त्यतिशयात्केवलं मया तथोक्तमित्याह—

महेश्वरे वा जगतामधीश्वरे
जनार्दने वा जगदन्तरात्मनि ।
न वस्तुभेदप्रतिपत्तिरस्ति मे
तथापि भक्तिस्तरुणेन्दुशेखरे ॥ ८५ ॥

जगतामधीश्वरे जगन्नियामके महेश्वरे । जगदन्तरात्मनि जीवात्मस्वरूपेण वर्तमाने जगद्व्यापिनि वा जनार्दने । मे वस्तुभेदप्रतिपत्तिः । अयं महेश्वरोऽयं जनार्दन इति स्वरूपभेदज्ञानं नास्ति । तथापि मे मम भक्तिः तरुणश्चासौ इन्दुश्च स शेखरे यस्य तस्मिञ्शंकरे अतिशयेन वर्तते । अत एवमुक्तमिति भावः । वंशस्थं वृत्तम् ॥

---

१ जरा. २ हि सर्वान्तकर ३ मदनान्तका०, मधुसूदना० ४ मुकेस्तु. ५ द्वयोर्न भेद०; न भेदहेतुमति.

अथ शिव उत्पन्नानुरक्ते शमस्योदयवशादाविर्भवतः निर्वेदस्थायिन शान्तरसस्य व्यञ्जकानि वाक्यान्याह पञ्चभि —

स्फुरत्स्फारज्योत्स्नाधवलिततले क्वापि पुलिने
सुखासीनाः शान्तध्वनिषु रजनीषु द्युसरितः ।
भवाभोगोद्विग्नाः शिव शिव शिवेत्युच्चवचसः
कदा स्यामानन्दोद्गतबहुलबाष्पाप्लुतदृशः ॥ ८६ ॥

शान्ता ध्वनय पक्षिमृगादिशब्दा यासु तासु रजनीषु रात्रिषु । एतेनान्तःकरणविक्षेपहेतुराहित्यं सूचितम् । स्फुरन्ती या स्फारा बहुला ज्योत्स्ना कौमुदी तया धवलितं तलं यस्य तस्मिन् । द्युसरित स्वर्धुन्या क्वापि पुलिने सैकते । सुखेनासीना. उपविष्टा । भवस्य संसारस्य भवानां जन्मनां वा आभोग. विस्तारस्तेन उद्विग्ना उद्वेग प्राप्ता । शिव शिव शिवेति उच्चं वचो येषां ते । आनन्देन उद्गता ये बहुला बाष्पा ते. आप्लुता दृश येषां ते । कदा कस्मिन्काले स्याम भवेम । येन कृतकृत्या स्म इति भाव । शिखरिणी ॥

वितीर्णे सर्वस्वे तरुणकरुणापूर्णहृदयाः
स्मरन्तः संसारे विगुणपरिणामा विधिगतीः ।
वयं पुण्यारण्ये परिणतशरच्चन्द्रकिरणा-
स्त्रियामा नेष्यामो हरचरणचिन्तैकशरणाः ॥ ८७ ॥

सर्वं च तत्स्व धनं च तस्मिन् । वितीर्णे धर्मबुद्ध्या दत्ते । तरुणा प्रत्यग्रा या करुणा तया पूर्णं हृदय येषाम् । विगुण निर्गुण । अनिष्ट इति यावत् । परिणामः परिपाको यासां ता विधिगती दैवविलसितानि । परिणता उपचिता शरत्संबन्धिचन्द्रस्य परिणतस्य शरच्चन्द्रस्य वा किरणा अंशव यासु ता त्रियामा क्षपा । हरस्य चरणयो या चिन्ता ध्यानं सैव एक शरणं आश्रय. येषां ते । 'शरणं गृहरक्षित्रो.' इत्यमर । शिख॰ ॥

कदा वाराणस्याममरतटिनीरोधसि वस-
न्वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।

१ सुखा २ भाव, भवे; वचसा ३ वाराणसीमोऽन्तैश्च दुर्दर बाष्पाकुलदृशाम् ४ भाद्रुन. ५ तामी, विरमपरिणामां र्गतिम्; विगुणपरिणामावधिगतीम्, ६ कदा ७ किरणै.; किरणैः किरणां त्रियामां. ८ विवेक

अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ८८ ॥

वाराणस्यां काश्याममरतटिन्या भागीरथ्याः रोधसि तटे वसन् । कौपीनं चीरखण्डं वसानो धारयन् । वस आच्छादन इति धातो शानच् । शिरसि अञ्जलिरेव पुटं निदधानः । अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन मे प्रसीद इत्याक्रोशन् आक्रोशं कुर्वन् निमिषमिव दिवसान् कदा नेष्यामि । अत्यन्तोत्सुकोऽपि अस्या अवस्थायाः न जाने कदाहं पूर्णमनोरथो भविष्यामीत्यर्थः । शिखरिणी ॥

स्नात्वा गाङ्गैः पयोभिः शुचिकुसुमफलैरर्चयित्वा विभो त्वां
ध्येये ध्यानं नियोज्य क्षितिधरकुहरग्रावपर्यङ्कमूले ।
आत्मारामः फलाशी गुरुवचनरतस्त्वत्प्रसादात्स्मरारे
दुःखं मोक्ष्ये कदाहं समकरचरणे पुंसि सेवासमुत्थम् ॥ ८९ ॥

गङ्गाया इमानि गाङ्गानि तैः । हे विभो शम्भो शुचीनि कुसुमानि फलानि च तैः त्वां अर्चयित्वा पूजयित्वा । ध्येये ध्यानाश्रये । त्वच्चरणकमले इत्यर्थः । ध्यानं चित्तैकतानतां नियोज्य समाधाय । क्षितिं धारयतीति क्षितिधरः । तस्य कुहरं गुहा तत्र यः ग्रावा स एव पर्यङ्कः तस्य मूले । आत्मनि आरमतीति आत्मनि आरामो वा यस्य स आत्मारामः । निवृत्तेच्छ स्वात्मन्येव रममाण इत्यर्थः । फलानामशन तच्छीलः । फलैर्वृत्तिं कुर्वन्नित्यर्थः । गुरुवचने गुर्वादेशे रतः । आचार्योपदिष्टकर्मानुष्ठानपर इत्यर्थ । इत्थंभूत सन्नहम् । हे स्मरारे शंकर । समौ समानौ करौ चरणौ च यस्य तस्मिन् समकरचरणे पुंसि सेवायाः समुत्थं उत्पन्नं दुःखं कदा मोक्ष्ये । स्वसमानधर्मवत्पुरुषदत्तदुःखात्कदाऽहं मुक्तो भविष्यामीति तात्पर्यम् । 'मकरेण मकराकाररेखया सह वर्तते इति समकरश्चरणो यस्य तस्मिन् तथोक्ते पुंसि महाभाग्यसम्पन्ने पुरुषे । राज्ञि इत्यर्थः । समकरचरणस्य महाभाग्यसम्पन्नत्वमुक्तं सामुद्रिके-मकरो मत्स्यरेखा च पद्मशङ्खाकृतिः पदे । महाधनी महाभोगी दाता दीर्घायुरेव च ॥ इति । इति रामचन्द्रबुधेन्द्रः । स्रग्धरा ॥

एकाकी निस्पृह शान्तः पाणिपात्रो दिगम्बरः ।
कदा शम्भो भविष्यामि कर्मनिर्मूलनक्षमः ॥ ९० ॥

१ ति क्रो. २ निवेश्य. ३ शय्यानिषण्णः. ४ दु स्वान्मोक्ष्ये कदाह तव चरणरतो ध्यानमार्गैकपदनः ।

हे शम्भो शंकर । एकाकी असहाय । सङ्गरहित इत्यर्थः । संगात्संजायते काम इत्यादिवचनात्तस्यानर्थहेतुत्वात् । एकादाकिनिचासहाये इत्याकिनिच्प्रत्ययः । निःस्पृह निस्तृष्णः । शान्त उपरतेन्द्रिय । रागाद्यनुपहतचित्त इत्यर्थः । शान्तो दान्त उपरतस्तितिक्षुः समाहितो (श्रद्धावित्तो) भूत्वेत्यादिश्रुतेः । पाणिः एव पात्रं यस्य स । दिश एव अम्बरं वस्त्रं यस्य । सन्यासी त्यक्तसर्वपरिग्रह इत्यर्थः । कर्मणां संचितप्रारब्धानां निर्मूलने नाशे क्षमः समर्थः । कदा कस्मिन्काले भविष्यामि । एवंविधावस्थालालसोऽहमस्मि इदानीं मत्तः । तथा च भगवद्वचने गीतायाम्-एकाकी यतचित्तात्मा त्यक्तसर्वपरिग्रहः । शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ इति । अनुष्टुप् ॥

एतदवस्थापन्नानां शिवप्रसादान्मोक्षमार्गः सुलभ एवेति निगमयति—

पाणिं पात्रयतां निसर्गशुचिना भैक्षेण संतुष्यतां
यत्र क्वापि निषीदतां बहुतृणं विश्वं मुहुः पश्यताम् ।
अत्यागेपि तनोरखण्डपरमानन्दावबोधस्पृशा-
मध्वा कोपि शिवप्रसादसुलभः संपत्स्यते योगिनाम् ॥९१॥

पाणिं पात्रयतां पात्रवदुपयुञ्जानानां । पात्रशब्दात् तत्करोति—इति ण्यन्तात्लट् शत्रादेश । निसर्गत स्वभावत शुचि तेन । भैक्षं भिक्ष्यत इति तेन भिक्षाकदम्बकेन । भिक्षादिभ्योऽण् । विश्वं प्रपञ्च ईषदसमाप्तं तृणं बहुतृणम् । तृणवदिति यावत् । विभाषा सुपो बहुच्पुरस्तात्तु इति बहुच् प्रत्ययः प्रकृतेः पुरस्ताद्भवति । स्यादीपदसमाप्तौ तु बहुच्प्रकृतिलिङ्गकः इति वचनात्प्रकृतिलिङ्गता । पश्यताम् । अखण्ड अपरिच्छिन्न य परमानन्दस्तस्य अवबोध प्रतिपत्ति तं स्पृशन्तीति तेषाम् । जीवद्दशायामेव ब्रह्मानन्दमनुभवतामित्यर्थः । स्पृशोऽनुदके क्विन् इति क्विन्प्रत्यय । योगिनाम् । तनो शरीरस्य अत्यागे । देहसम्बन्धे विद्यमानेपीत्यर्थ । शिवप्रसादेन सुलभ कोप्यध्वा मोक्षमार्ग इति यावत् । संपन्नो भवति । स्पृहा मर्त्य. इत्यादि पाठे कोपि भाग्यवान्मर्त्यः ब्रह्मानन्दावबोधाय स्पृहा संपत्स्यते प्राप्नोति । आश्चर्यवदेव कश्चिद्वीरो यो योगिगम्यां स्पृहां लभत इत्यर्थः । शार्दूलवि० ॥

१ स्पृहा मर्त्य. ..सुलभा.

अथ अवधूतचर्या—

अवधूतो नाम ब्रह्मात्मैक्यानुसंधानपरो जीवन्मुक्तस्तस्य चर्याचारः ।

कौपीनं शतखण्डजर्जरतरं कन्था पुनस्तादृशी
नैश्चिन्त्यं निरपेक्षभैक्षमशनं निद्रा श्मशाने वने ।
मित्रामित्रसमानताऽतिविमला चिन्ताऽथ शून्यालये
ध्वस्ताशेषमदप्रमादमुदितो योगी सुखं तिष्ठति ॥ ९२ ॥

शतं खण्डानि शकलानि तैः जर्जरतरं अधिकजर्जरं कौपीनं आच्छादनम् । पुनः कन्था तादृशी तथैव इति यावत् । नैश्चिन्त्यं चिन्तारहित्यम् । निरपेक्षमपेक्षारहितं च तद्भैक्ष च । 'भिक्षादिभ्योऽण् इति अण् । श्मशाने शवा शेरते ऽस्मिन्निति श्मशानं तस्मिन् प्रेतभूमौ वने वा निद्रा शयनम् । मित्रामित्रयोः मित्रशत्र्वो समानता समभाव । तुल्यो मित्रारिपक्षयोरिति भगवद्वचनात् । अथ शून्यालये निर्जनस्थाने अतिविमला अत्यन्तशुद्धा चिन्ता समाधि । ध्वस्तो अशेष मद प्रमादश्च ताभ्या मुदितः । ध्वस्ता ये अशेषा मदजनिताः प्रमादाः तैः मुदित इति वा । ध्वस्ताशेषप्रमाद अत एव मुदित इति वा । सर्वोपद्रवरहित सन्योगी सुख तिष्ठतीत्यर्थ । शार्दूलवि० ॥

एवंविधस्य योगिनश्चित्तं ब्रह्माण्डमप्याकष्टुं नालमित्याह—

ब्रह्माण्डमण्डलीमात्रं किं लोभाय मनस्विनः ॥
शफरीस्फुरितेनाब्धेः क्षुब्धता जातु जायते ॥ ९३ ॥

मनस्विन धीरस्यात्मज्ञानिन. । ब्रह्माण्डाना मण्डली समूह सैव तन्मात्रं लोभाय चित्तप्रलोभनाय किं नेत्यर्थ. । शफर्या मत्स्यविशेषस्य स्फुरितेन स्फुरणेन अब्धे समुद्रस्य क्षुब्धता जातु कदाचिज्जायते किं नैव जायत इत्यार्थिकम् ॥

अथ वैराग्यप्रकारमाह—

मातर्लक्ष्मि भजस्व कंचिदपरं मत्काङ्क्षिणी मा स्म भू-
र्भोगेभ्यः स्पृहयालवो न हि वयं का निस्पृहाणामसि ।
सद्यःस्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृते
भिक्षासक्तुभिरेव संप्रति वयं वृत्तिं समीहामहे ॥ ९४ ॥

---

१ निश्चिन्तं सुखभाज्य. २ शय्या. ३ तत्त्व०. ४ मत्त.प्रमोद; स्वात्मानन्दमदप्रमोद.

मात लक्ष्मि । इत्यनेन रत्नभावो द्योतित । भजस्व सेवस्व । मत्कांक्षिणी मय्यभिलाषिणी मा स्म भू । स्मोत्तरे लङ् च इति चकारादाशीरर्थे लुङ् । न माङ्योगे इत्यडागमनिषेध । तत्र हेतुमाह भोगेभ्य इति । वय भोगेभ्यः। 'स्पृहेरीप्सित' इति चतुर्थी । स्पृहयालव कामिनः न । 'स्पृहिगृहि॰' इति आलुच् । निःस्पृहाणामस्माक त्व कासि । न कापि त्वय्यास्थेत्यर्थ । यतः अयं सद्य तत्कालं स्यूता निर्मिता । कर्मणि क्त । च्छ्वो शूडनुनासिके च इति छठि मणादेश । पलाशपत्राणां पुटिका । द्रोण इति प्राकृते प्रसिद्धा । सैव पात्रं तस्मिन् । अपवित्रे पवित्रे संपद्यमाने कृतं तस्मिन् । भिक्षया लब्धा सक्तव । भिक्षासक्तवस्तै । सम्प्रति इदानीम् । वृत्तिमुपजीविकाम् । कामीहामहे इच्छाम । विक्षेपाद्युपाधिरहित भैक्ष्यमेव ममेष्टं न पुन श्रीप्रयुक्ता दुःखपरिणामा भोगा इति तात्पर्यम् । शार्दूलवि॰ ॥

अथ योगिन ऐश्वर्यसम्पन्नेन नृपेण साम्यमाह—

मही रम्या शय्या विपुलमुपधानं भुजलता
वितानं चाकाशं व्यजनमनुकूलोयमनिलः ।
स्फुरद्दीपश्चन्द्रो विरतिवनितासङ्गमुदितः
सुखं शान्त शेते मुनिरतनुभूतिर्नृप इव ॥ ९५ ॥

भुजलता बाहुलता । विपुल विस्तृतम् । उपधीयते शिरोत्र इति उपधानं उपबर्ह॰ । 'उशी' इति भाषायाम् । वितानम् उल्लोच 'चांदवा' इति प्राकृते । आकाशम् । अयमनुकूलोऽनिल वायु व्यजन तालवृन्तकम् । 'पंखा' इति भाषाप्रसिद्धि । चन्द्र स्फुरन् दीप । विरति शान्तिरेव वनिता स्त्री तस्याः संगेन समागमेन मुदित प्रीत तृप्तो वा । न तनु अतनु भूतिरैश्वर्यं यस्य स मुनि । निवृत्त सर्वतत्त्वज्ञ कामक्रोधादिवर्जित. । ध्यानस्थो निष्क्रियो दान्त- स्तुल्यमृत्काञ्चनो मुनि. ॥ इत्युक्तलक्षणः । विपुलैश्वर्यपतिर्नृप इव शेते निद्राति । रूपकसंकीर्णोयमुपमालंकारः । तथा उपमानान्नृपादुपमेयस्य मुनेरपरिच्छिन्नशय्या- दिसम्पन्नत्वेनाधिक्यप्रतीतेर्व्यतिरेको व्यज्यत इत्यलंकारेणालंकारध्वनिरिति राम- चन्द्रबुधेन्द्र. । वृत्तं शिखरिणी ॥

---

१ महाराज्य पुरी. २ सुखी. ३ शरच्चन्द्रो दीप. ४ सुखी

अथ योगिस्वरूपमाह द्वाभ्याम्—

भिक्षाशी जनमध्यसंगरहितः स्वायत्तचेष्टः सदा
दानादानविरक्तमार्गनिरतः कश्चित्तपस्वी स्थितः ।
रथ्याकीर्णविशीर्णजीर्णवसनैरास्यूतकन्थाधरो
निर्मानो निरहंकृतिः शमसुखाभोगैकबद्धस्पृहः ॥ ९६ ॥

भिक्षामश्नातीति भिक्षाशी । जनमध्ये यः संग प्रीतिस्तेन रहित । स्वस्य आयत्ता अधीनाः चेष्टा इन्द्रियव्यापारा यस्य स । दान च आदानं प्रतिग्रहकरणं च ताभ्यां विरक्त उदासीनो यो मार्ग. तस्मिन्निरतः । रथ्यायां यानि कीर्णानि विशीर्णानि च जीर्णानि वसनानि तै. आस्यूता कृता या कन्था ता धारयतीति तथा । मानरहित. निर्मानः निरहंकृतिः निरहकार. शमसुखस्य आभोगोतिशयः स एव एकस्तस्मिन् बद्धा स्पृहा येन स । उक्तलक्षणः पुरुषः कश्चित्कचिदेव दृश्यते इत्यर्थ । स्वभावोक्तिरलंकार । शार्दूल० ॥

चाण्डालः किमयं द्विजातिरथवा शूद्रोथ किं तापसः
किं वा तत्त्वविवेकपेशलमतिर्योगीश्वरः कोपि किम् ।
इत्युत्पन्नविकल्पजल्पमुखरैः संभाष्यमाणा जनै-
र्न क्रुद्धाः पथि नैव तुष्टमनसो यान्ति स्वयं योगिनः ९७

द्विजाति· त्रैवर्णिक. । तत्त्वस्य विवेके पेशला पटु मतिर्यस्य । उत्पन्ना ये विकल्पा तेषां जल्पै जल्पनैर्मुखरा वाचालास्तैः । एवंविधानि वाक्यान्युदाहरद्भिरित्यर्थ. । तुष्टं प्रीतं मनो येषाम् । यान्ति ब्रह्मनिष्ठत्वात्तूष्णीं गच्छन्ति । तदुक्तं गीतायां न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् । स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः । शीतोष्णसुखदुःखेषु तथा मानापमानयो. ॥ इत्यादि । 'अनाविष्कुर्वन्नन्वयात्' इति उत्तरमीमांसान्यायेन 'पाण्डित्यं निर्विद्याय बाल्येन तिष्ठासेत्' इति बृहदारण्यकश्रुत्या 'अद्वैतं समनुप्राप्य जडवल्लोकमाचरेत्' इति च गौडपादीयकारिकाया आहितमर्यादामनुरुद्ध्य वर्तनं करोतीति तात्पर्यम् । शार्दूलवि० ॥

१ दाना २ क्षीण. ३ वसन·. ४ संप्रोत०; संभाषमाणा—जनः ५ तत्त्वनिवेश- ६ राभाष्य०, राभाष्यमाना.

अथ योगिनो हिंसादिराहित्यवृत्तिमाह—

हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं
व्यालानां पशवस्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनः ।
संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां
यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ ९८ ॥

हिंसया शून्यं रहितम् । अयत्नलभ्यं अनायासेन प्राप्यम् । व्यालानां सर्पाणामशनं भक्ष्यं धात्रा विधिना मरुद्वायुः कृतम् । तेनैव स्थलशायिनः स्थलभूमौ शेरते तच्छीलाः पशवः तृणानामङ्कुरान् भुञ्जते इति तृणाङ्कुरभुजः सृष्टाः । संसार एवार्णवस्तस्य लङ्घने क्षमा समर्था धीर्बुद्धिर्येषां तेषां नृणां सा वृत्तिः जीविका कृता यां सततमन्वेषयतां मार्गयतां सर्वे गुणाः विद्वत्त्वैश्वर्यादयः समाप्तिं प्रयान्ति । अतो योगिनो यदृच्छालाभेन संतुष्टा हिंसाराहित्येन वृत्तिं कुर्वन्तीति भावः । शार्दूल० ॥

अथ निश्चलवृत्तित्वमाह—

गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य ।
किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशङ्काः
कण्डूयन्ते जरठहरिणाः स्वाङ्गमङ्गे मदीये ॥ ९९ ॥

गङ्गायास्तीरे हिमगिरेः शिलायां बद्धं पद्मासनम् । ऊरुमूले वामपादं पुनस्तु दक्षिणं पदं । वामोरौ स्थापयित्वा तु पद्मासनमिति स्मृतम् ॥ इत्युक्तलक्षणं येन तस्य । ब्रह्मणः ध्यानं । 'तत्र प्रत्ययैकतानता ध्यानम्' इति योगसूत्रलक्षितं ध्येयैकप्रत्ययस्य तैलधारावदविच्छिन्नवृत्तित्वम् । तस्य अभ्यसनम् अभ्यासः पुनः पुनरनुष्ठानम् । 'अभ्यासो नाम चित्तभूमौ कस्याश्चित्समानप्रत्ययावृत्तिश्चित्तस्य' इति आचार्योक्तिः । तस्य विधिना करणेन योगनिद्रां संप्रज्ञातसमाधिं गतस्य प्राप्तस्य मम तैः सुदिवसैः पुण्यदिवसैः भाव्यं किम् । एवंविधान् पुण्यदिवसानहं पश्यामि किमिति यावत् । यत्र दिवसेषु । जरठाः वृद्धा हरिणाः निर्विशङ्काः निर्भयाः सन्तः । कण्डूयन्ते । शिलापाषाणमिव चेतनरहितं जडपदार्थं मां ज्ञात्वेति पूरणम् । एकान्तवासी 'यस्मान्नोद्विजते लोको

1 वायु कृतो वेधसा 2 तृणा० 3 तासू 4 सहसा 5 येषु. 6 शुभदिने. संतप्तवन्ते गृहहरिणा शुष्ककण्डूदिने.दन्.

४

लोकान्तोद्विजते च यः' इति सर्वसाम्यावस्थः बहिर्विषयविज्ञानरहितश्च कदा भविष्यामीति चिन्ता योनितास्मिन्नर्थे । मन्दाक्रान्ता ॥

अथात्यन्तवैराग्येण कर्मनिर्मूलनप्रकारमाह—

पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्षमक्षय्यमन्नं
विस्तीर्णं वस्त्रमाशादशकमपमलं तल्पमस्वल्पमुर्वी ।
येषां निःसङ्गताङ्गीकरणपरिणतिः स्वात्मसंतोषिणस्ते
धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म निर्मूलयन्ति १००

पाणिः हस्तः । लक्षणया हस्तपुटम् । पात्रं भाण्डम् । भ्रमणेन परिगतं लब्धं भैक्षं भिक्षाया समूहः । 'तस्य समूहः' इति अण् । अक्षय्यम् अशक्यक्षयम् । 'क्षय्यजय्यौ शक्यार्थे' इति यान्तादेशः । अन्नं भक्तादि । विस्तीर्णं विपुलमाशानां दिशां दशकं दशानां समूहः तदेव अपगतः मलः यस्मात् तदपमलं वस्त्रम् । उर्वी पृथ्वी अस्वल्पं महत्तल्पं शयनीयम् । एवं येषां निःसंगतायाः अनासक्त्या अङ्गीकरणं स्वीकरणमेव परिणतिः । स्वात्मनि एव संतोषो येषां एवं ते स्वात्मसंतोषिणः । संन्यस्ताः त्यक्ता दैन्यप्रयुक्ता ये व्यतिकराः व्यसनानि व्यतिषङ्गा वा तेषां निकराः यैः । 'अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः' इति मेदिनी । स्रग्धरा ॥

अथ पञ्च भूतानि संबोध्याह—

मातर्मेदिनि तात मारुत सखे तेजः सुबन्धो जल
भ्रातर्व्योम निबद्ध एष भवतामन्त्यः प्रणामाञ्जलिः ।
युष्मत्सङ्गवशोपजातसुकृतोद्रेकस्फुरन्निर्मल-
ज्ञानापास्तसमस्तमोहमहिमा लीये परे ब्रह्मणि ॥ १०१ ॥

हे मातः मेदिनि स्थूलशरीरस्य पृथ्वीद्रव्यत्वात् । तात पितः मारुत । वायोः पोषकत्वात्सुखदत्वाद्वा । सुबन्धो उत्तमबन्धो । व्योम आकाश । अन्त्यः चरमः । पुनर्भवायोगात् । प्रणामस्य अञ्जलिः । युष्माकं संगः तद्वशेन उपजातं यत्सुकृतं तस्य उद्रेकेणातिशयेन स्फुरत् निर्मलं शुद्धं च ज्ञानं तेन अपास्तः अपगतः समस्तः मोहस्य महिमा यस्य तथाभूतः अहं परे ब्रह्मणि सच्चिदानन्दस्वरूपे लीये लीनो भवामि । कृतसर्वसङ्गपरित्यागश्चिदानन्दस्वरूपो जीवन्मुक्तः स्यामहं भवेयमित्याशयः । शार्दूलवि० ॥

इति श्रीभर्तृहरिविरचितं वैराग्यशतकं समाप्तम् ।

---

१ भ्र. २ स्व., मंथ ३ तल्पम ४ ज्ञान ५ महायोगपरमर्हं०.

## संकीर्णश्लोकाः ।

येनैवाम्बरखण्डेन संवीतो निशि चन्द्रमा ।
तेनैव च दिवा भानुरहो दौर्गत्यमेतयो ॥ १ ॥

येनैव अम्बरखण्डेन वस्त्रैकदेशेन । पक्षे नभोभागेन । संवीतः आच्छादितः । तेनैव दिवसे भानुः सूर्यो वेष्टितः । पक्षे सञ्चरति । अहो इत्याश्चर्ये । एतयोस्तज्जगत्स्वनादौर्गत्यं दुर्गतस्य भावः दैन्यं । समर्थयोरपि दैन्यमस्मिन्दृतसंसारे दृश्यते चेत् का कथा अस्मादृशानां मर्त्यानामसमर्थानां चेति भावः ॥

विवेकव्याकोशे विकसति शमे शाम्यति तृषा-
परिष्वङ्गे तुङ्गे प्रसरतितरां सा परिणतिः ।
जराजीर्णैश्वर्यग्रसनगहनाक्षेपकृपण
कृपापात्रं यस्यां भवति मरुतामप्यधिपतिः ॥ २ ॥

विवेकस्य व्याकोशः उन्मीलनं यस्मिंस्तस्मिन् । शमो नाम श्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रहः । इत्युक्तलक्षणे शमे । व्यधिकरणोऽयं बहुव्रीहिः । यद्वा विवेकेन व्याकोशः स्फुटः । विकसति सति । तुङ्गे उच्छूने । अतिदृढे इति यावत् । तृषायाः परिष्वङ्गे आश्लेषे शाम्यति सति सा परिणतिः सुखातिशयरूपा प्रसरति नितरामतिशयेन विस्तृता भवति । जरया जीर्णं यदैश्वर्यं तस्य ग्रसनेनोपभोगेन कृतो गहनो यः आक्षेपः चित्तव्याकुलता निन्दा वा तेन कृपणो दीनः मरुतां पतिरिन्द्रोऽपि यस्यां परिणतौ कृपापात्रमनुकम्पास्पदं भवति । तृषापात्रमिति पाठे एतस्मिन्सुखे सतृष्णो भवति । सान्तस्य स्वर्गसुखस्य तुच्छत्वादिति भावः । इतः श्लोकपञ्चकस्य वृत्तं शिखरिणी ॥

पुरा विद्वत्तासीदुपशमवतां क्लेशहतये
गता कालेनासौ विषयसुखसिद्ध्यै विषयिणाम् ।
इदानीं तु प्रेक्ष्य क्षितितलभुजः शास्त्रविमुखा-
नहो कष्टं सापि प्रतिदिनमधोधः प्रविशति ॥ ३ ॥

पुरा प्राचीनकाले विद्वत्ता उपशमवतां शान्तिपराणां क्लेशहतये दुःखनाशार्थमासीत् । कालेन दीर्घकालेनासौ विषयिपुरुषाणां विषयसुखसिद्ध्यै वैषयिकसुखप्राप्त्यर्थं गता । इदानीं तु क्षितितलभुजः भूपान् शास्त्रविमुखान् शास्त्ररता-

---

१ वस्त्र. २ शनैः ३ महता. ४ तृषा. ५ दमशिनिपिता. ६ रूप.

दुःखान्प्रेक्ष्य सापि विद्वत्ता प्रतिदिनमधोऽधो गच्छति । एवं समुचिताश्रयाभावादधिकाधिकं नीचावस्थापन्ना भवतीत्यहो कष्टम् ॥

अतिक्रान्तः कालो लटभललनाभोगसुभगो
भ्रमन्तः श्रान्ताः स्मः सुचिरमिह संसारसरणौ ।
इदानीं स्वःसिन्धोस्तटभुवि समाक्रन्दनगिरः
सुतारैः फूत्कारैः शिव शिव शिवेति प्रतनुमः ॥ ४ ॥

लटभा मनोज्ञा या ललनाः स्त्रियस्तासां भोगेन उपभोगेन सुभगो रमणीयः । इहास्यां । अथवा अस्मिन्मर्त्यलोके । संसार एव सरणिर्मार्गस्तस्यां सुचिरं दीर्घकालं भ्रमन्तः श्रान्ताः श्रमपूर्णाः स्मः । इदानीं स्वःसिन्धोः स्वर्धुन्या गङ्गायाः तटसंबन्धिनी या भूस्तस्यां सुतारैः दीर्घैः फूत्कारैः फूत् इति शब्दैः । खेददर्शकोऽयं ध्वनिः । सह शिव शिव शिव इति समाक्रन्दनस्य गिरः प्रतनुमः उदाहरामः ॥

महादेवो देवः सरिदपि च सैवामरसरि-
द्गुहा एवागारं वसनमपि ता एव हरितः ।
सुहृद्वा कालोऽयं व्रतमिदमदैन्यव्रतमिति
कियद्वा वक्ष्यामो वटविटप एवास्तु दयिता ॥ ५ ॥

महादेव एव देवः । अमरसरित् देवनदी एव सरित् । अगारं गृहम् । हरितो दिशः । वसनमाच्छादनम् । कालो मृत्युः । न विद्यते दैन्यरूपं याच्ञारूपं व्रतं यस्मिन् तददैन्यव्रतमेव व्रतम् । वटविटपो न्यग्रोधवृक्ष एव दयिता स्त्रीस्थाने इत्यर्थः ॥

अहो धन्याः केचित्त्रुटितभवबन्धव्यतिकरा
वनान्तेऽचिन्वन्तो विषमविषयाशीविषगतिम् ।
शरच्चन्द्रज्योत्स्नाधवलगगनाभोगसुभगां
नयन्ते ये रात्रिं सुकृतचयचिन्तैकशरणाः ॥ ६ ॥

अहो आश्चर्यं । त्रुटितः छिन्नो भव एव बन्धः तस्य व्यतिकरः संबन्धो येषां ते । वनान्ते वनमध्ये विषमाः कठिना ये विषया इन्द्रियार्थाः ते एव आशीविषाः सर्पाः । आश्यां विषमस्यास्तीति आशीविषः । तेषां गतिं मार्गमचिन्वन्तः अमृगयमाणाः । विषमेति गतिविशेषणं वा । शरदि यः चन्द्रः तस्य ज्योत्स्ना चन्द्रिका तया धवलो यो गगनस्य आभोगः परिपूर्णता । विस्तीर्ण-

१ त्रुटित्र २ सुभगो ३ लक्ष्मे. ४ चिन्वान्तर्विषमविषयाशीविषगताः. ६ चिन्तैक.

प्रदेश इति यावत् । तेन शुभगा ताम् । मुकुन्दस्य चय' इन्दि संद्रियया या चिन्ता सैव एक शरण आश्रयो येषां ते । अन्यत्सर्वं विहाय केवल पुण्योपचयचिन्ता-परा भूत्वा रात्रिं यापयन्ति ते धन्या इत्यर्थ ॥

यूयं वयं वयं यूयमित्यासीन्मतिरावयोः ।
किं जातमधुना येन यूयं यूयं वयं वयम् ॥ ७ ॥

पुरा आवयोरुभयोर्मध्ये यूयं वयं इति भेदो नासीत् । तुल्यावस्थत्वात् । इदानीं तव सपद्यावस्थायाम् । किं कारणं जातं येन हे मित्र तव मम च मध्ये यूयं यूयमेव वयं वयमेव इति भेदो जात ॥

जीर्णा कन्था ततः किं सितममलपटं पट्टवस्त्रं ततः किं-
मेका भार्या ततः किं हयकरिसुगणैरावृतो वा ततः किम् ।
भक्तं भुक्तं ततः किं कदशनमथवा वासरान्ते ततः किं
व्यक्तं ज्योतिर्न वान्तर्मथितभवभयं वैभवं वा ततः किम् ॥ ८ ॥

सित शुभ्रम । अमलं निर्मलम् । पट्टवस्त्र दुकूलादि महार्घवस्त्रम् । हयगजानां सुगणै बहुसमूहै आवृत परिवेष्टित । भक्तं स्वाद्वोदनम् । दिनान्ते सायंकाले इत्यर्थ । कदशनं कुत्सितमशनम् । 'को कत्तत्पुरुषेऽचि' इति कत्। अथवा व्यक्तं स्फुटं ज्योति प्रकाश न ततः किम् । वा अथवा अन्तर्मथित नाशित भवस्य भयं यस्मिन् तत् वैभवं ऐश्वर्यं ततः किम् । अनेन निष्कामतातिशयो ध्वन्यते । स्रग्धरा ॥

यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदपि ।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ ९ ॥

स्मर मदन एव तिमिरमान्ध्यहेतु तत्संस्काराज्जनितमज्ञानं ज्ञानप्रतियोगि यदा यस्मिन्काले आसीत् तदा इदमशेषमपि जगत् नारीमयं स्त्रीप्रचुरं दृष्टम् । अस्माभिरित्यध्याहार । इदानीमित्यनेन विवेकावस्था द्योतिता । अतिशयेन पटु कुशल पटुतर यो विवेक स एव अञ्जनं तज्जुषामस्माकं समीभूता सर्वत्रसाम्यावस्थापन्ना दृष्टि त्रिभुवनमपि । न तु केवलमेकं जगत् । ब्रह्म मनुते । ब्रह्मातिरिक्तं तद्व्यतिरिक्तं वा किंचिन्नास्तीति पश्याम इति भाव । शिखरिणी ॥

---

१ नित्य. २ वर्. ३ मर्त्य. ४ बहुगणैर्मित्र वाजिभिः ५ श्वमन्नौ. ६ इति ७ दुखे.

शान्तं सतां मानमदादिनाशनं
केषांचिदेतन्मदमानकारणम् ।
स्थानं विविक्तं यमिनां विमुक्तये
कामातुराणामतिकामकारणम् ॥ १० ॥

मानश्च मदश्च मानमदौ तौ आदौ तेषां येषां नाशनं नाशकर्तृ । केषांचित् क्षुद्राणां । एतदेव शान्तं मदमानकारणं मदमानयो जनयितृ । विविक्तं निर्जनं स्थानं यमिनां जितेन्द्रियाणां विमुक्तये मुक्त्यर्थम् । तदेव स्थानं कामातुराणां कामिनां अतिकामस्य पुष्कलकामस्य कारणं हेतु । वंशस्थं वृत्तम् ॥

शय्या शैलशिला गृहं गिरिगुहा वस्त्रं तरूणां त्वचः
सारङ्गाः सुहृदो ननु क्षितिरुहां वृत्तिः फलैः कोमलैः ।
येषां नैर्झरमम्बुपानमुचितं रत्यै च विद्याङ्गना
मन्ये ते परमेश्वराः शिरसि यैर्बद्धो न सेवाञ्जलिः ॥ ११ ॥

शैलशिला शैलसंबन्धिनी शिला एव शय्या । गिरेर्गुहा गृहं । सारङ्गा हरिणाः पक्षिणो वा । क्षितिरुहां वृक्षाणां । वृत्तिः उपजीविका । रत्यै क्रीडार्थं विद्याङ्गना विद्यारूपा स्त्री । एवंविधपरिवारयुतैः यैः सेवार्थं अञ्जलिः सेवाञ्जलिः शिरसि मस्तके न बद्धः ते परमेश्वराः इति अहं मन्ये । धन्यास्ते सुकृतिनश्च यैः क्षुद्रोदरपूरणार्थमभीष्टतमं स्वातन्त्र्यं नापहारितमित्यर्थः । शार्दूलविक्रीडितम् ॥

सत्यामेव त्रिलोकीसरिति हरशिरश्चुम्बिनीविच्छटायां
सद्वृत्तिं कल्पयन्त्यां तटविटपिभवैर्वल्कलैः सत्फलैश्च ।
कोऽयं विद्वान्विपत्तिज्वरजनितरुजातीव दुःखासिकानां
वक्त्रं वीक्षेत दुःस्थे यदि हि न विभृयात्स्वे कुटुम्बेऽनुकम्पाम् १२

हरस्य शिरः चुम्बतीति हरशिरश्चुम्बिनी एवंविधा नीवि कवित्वस्य च्छटा यस्याः सा तथा तस्यां त्रिलोकीसरिति गङ्गायाम् । तटे ये विटपिनः तरवः तद्भवैः वल्कलैः तत्फलैश्च सद्वृत्तिं योग्योपजीविकां कल्पयन्त्यां सत्याम् । विपत्तिरेव ज्वरः तेन जनिता या रुक् तयातीव अत्यन्तं दुःखमास्ते आस्तु इति दुःखासिकाः तासां वक्त्रं मुखं कोऽयं विद्वान् ज्ञाता वीक्षेत यदि हि दुःस्थे स्वे कुटुम्बे अनुकम्पां न बिभृयात् । न कोऽपि याच्ञादुःखदैन्यं सहेतेत्यर्थः । स्रग्धरा ॥

१ निर्झर. २ रत्यै. ३ वटावटप.

उद्यानेषु विचित्रभोजनविधिस्तीव्रातितीव्रं तपः
कौपीनावरणं सुवस्त्रममितं भिक्षाटनं मण्डनम् ।
आसन्नं मरणं च मङ्गलसमं यस्यां समुत्पद्यते
तां काशीं परिहृत्य हन्त विबुधैरन्यत्र किं स्थीयते ॥ १३ ॥

यस्यां काश्याम् । तीव्रातितीव्रमत्यन्ततीव्रं तपः कृच्छ्रादि । अद्भुतभोजनप्रकारसदृशं भवति । कौपीनस्य गुह्यस्य आवरणमाच्छादनं सुवस्त्रम् । अमितं परिमितिरहितं भिक्षाटनं भिक्षार्थमटनं मण्डनं भूषणम् । यस्यां च आसन्नं निकटस्थितं मरणं मङ्गलसमं समुत्पद्यते । तां काशीं परिहृत्य परित्यज्य । हन्तेति खेदे । विबुधैः सुज्ञैः किमन्यत्र स्थीयते । अत्यन्तमाश्चर्यमिदमित्यर्थः । शार्दूल० ॥

नायं ते समयो रहस्यमधुना निद्राति नाथो यदि
स्थित्वा द्रक्ष्यसि कुप्यति प्रभुरिति द्वारेषु येषां वचः ।
चेतस्तानपहाय याहि भवनं देवस्य विश्वेशितु-
र्निर्दौवारिकनिर्दयोक्त्यपरुषं निःसीमशर्मप्रदम् ॥ १४ ॥

समयो दर्शनावसरः । रहस्यमेकान्तम् । यदि स्थित्वा द्रक्ष्यसि तर्हि प्रभुः कुप्यतीति येषां द्वारेषु वचः । हे चेतः तान् विहाय त्यक्त्वा विश्वस्य ईशितुर्देवस्य । द्वारि नियुक्तो दौवारिकः । निर्दया उक्तिः निर्दयोक्तिः । निर्गता दौवारिकस्य निर्दयोक्तयः यस्मात्तत् निर्दौवारिकनिर्दयोक्ति । अपरुषं निःसीमशर्मप्रदमत्यन्तसुखप्रदं भवनं याहि । उन्मत्तपुरुषाणां परुषवचनश्रवणस्थानानि विहाय सर्वदातारं करुणाकरं परमेश्वरं शरणमनुगच्छेति भावः । शार्दूल० ॥

अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥ १५ ॥

अहौ सर्पे । हारे स्रजि । बलवति रिपौ समर्थशत्रौ । लोष्टे मृत्पिण्डे । कुसुमानां पुष्पाणां शयनं शय्या तस्मिन् । दृषदि पाषाणे । स्त्रीणां समूहः स्त्रैणं तस्मिन् । समा दृक् यस्य तस्य । क्वचित् कुत्रापि पुण्यारण्ये बदरिकाश्रमसदृशपुण्यप्रदेशे ' शिव शिव शिव ' इति प्रलपतः वदतः मम दिवसाः यान्तु । यत्र कुत्रापि देशे यस्यां कस्यामपि वृत्तौ यस्य कस्यापि सङ्गे सततं शिवनामस्मरणं कुर्वतो ममायुर्यात्विति तात्पर्यम् । शिखरिणी ॥

---

१ द्रक्ष्यति २ यान्ति ३ पुण्य.

अकिंचनस्य दान्तस्य शान्तस्य समचेतसः ।
सदा संतुष्टमनसः सर्वाः सुखमया दिशः ॥ १६ ॥

नास्ति किंचन यस्य तस्य । दान्तस्य उपरतबाह्येन्द्रियस्य । शान्तस्य निगृहीतान्तःकरणस्य । समं चेतो यस्य तस्य संतुष्टमनसः प्रमुदितान्तःकरणस्य पुरुषस्य । सुखमयाः सुखप्रचुराः । सर्वदुःखकारणे मनसि परितुष्टे सति सर्वत्र सुखप्राचुर्यमनुभूयत इत्यर्थः ॥

अनावर्ती कालो व्रजति स वृथा तन्न गणितं
दशास्तास्ताः सोढा व्यसनशतसंपातविधुराः ।
कियद्वा वक्ष्यामः किमिव बत नात्मन्यपकृतं
त्वया यावत्तावत्पुनरपि तदेव व्यवसितम् ॥ १७ ॥

न आवर्तत इति तच्छीलः । वृथा व्यर्थं व्रजति गच्छतीति न गणितं मनसि कृतम् । तास्ताः परस्परविलक्षणा दशा अवस्थाः । व्यसनानां शतं तस्य संपातः पतनं तेन विधुरा विकलाः । बतेति खेदे । आत्मनि स्वस्मिन् । किमिव नापकृतं कोऽपकारो न कृतः । सर्वमपि अपकृतमित्यर्थः । व्यवसितं चेष्टितम् । यावदेतत्सर्वं कृतं तावत्पुनरपि तदेव कर्तुमारब्धम् । शिखरिणी ॥

उत्तिष्ठ क्षणमेकमुद्वह गुरुं दारिद्र्यभारं सखे
श्रान्तस्तावदहं चिरं मरणजं सेवे त्वदीयं सुखम् ।
इत्युक्तो[3] धनवर्जितेन सहसा गत्वा श्मशाने शवो
दारिद्र्यान्मरणं वरं वरमिति ज्ञात्वैव तूष्णीं स्थितः ॥ १८ ॥

हे सखे शव । गुरुं दुर्वहम् । अहं श्रान्तः ममाऽरभारवहनेन त्वदीयं मरणजं सुखं सेवे । तदेव मे अतीव रोचते । इति धनेन वर्जितः तेन दरिद्रेण गत्वा । सहसा सम्भ्रमेणोक्तः । दारिद्र्यान्मरणं वरं वरमिति ज्ञात्वा । वीप्सा आदरार्था । तूष्णीं मूकभावेन । 'दारिद्र्यदोषो गुणराशिनाशी' इति तु सुप्रसिद्धमेव । शार्दूल० ॥

एता हसन्ति च रुदन्ति च कार्यहेतो-
र्विश्वासयन्ति च परं न च विश्वसन्ति ।
तस्मान्नरेण कुलशीलसमन्वितेन
नार्यः श्मशानघटिका इव वर्जनीया ॥ १९ ॥

एताः स्त्रियः कार्यहेतोः स्वहेतुसिद्ध्यर्थं हसन्ति आनन्दप्रदर्शनं कुर्वन्ति रुदन्ति

---

१ मैनाक. २ [illegible] ३ इत्युक्तं धनवर्जितस्य वचनं श्रुत्वा. ४ वित्त. ५ पुम्यं. ६ वेश्याः.

रोदनं कुर्वते च। परं पुरुषं च विश्वासयन्ति स्वस्मिन् विश्रम्भं कारयन्ति स्वतस्तु न कस्मिन्नपि विश्वसन्ति। तस्मान्नरेण कुलं च शीलं च ताभ्यां सम्पन्नवतेन नार्यः श्मशाने या घटिका मृत्पात्रविशेषास्ता इव वर्जनीया दूरतः परिवर्जनीया। तासां अनर्थहेतुत्वात्। वसन्ततिलका ॥

कार्कश्यं स्तनयोर्दृशोस्तरलतालीकं मुखे श्लाघ्यते
कौटिल्यं कचसंचये च वदने मान्द्यं त्रिके स्थूलता।
भीरुत्वं हृदये सदैव कथितं मायाप्रयोगः प्रिये
यासां दोषगणो गुणो मृगदृशां ताः स्युः पशूनां प्रियाः ॥ २० ॥

स्तनयोः कर्कशस्य भावः कार्कश्यं काठिन्यं दोषपक्षे निर्दयता। दृशोः नेत्रयोः तरलता चञ्चलता पक्षे अस्थिरता। मुखे अलीकं ललाटदेशः पक्षे अनृतभाषणम्। श्लाघ्यते प्रशस्यते। कचसंचये केशपुञ्जे कुटिलस्य भावः कौटिल्यं वक्रता। वदने मान्द्यं गम्भीरता। त्रिके पृष्ठवंशाधारभागे। स्थूलता। मायाप्रयोगो वञ्चनप्रचुरचेष्टा। यासां मृगनयनानां दोषाणां गणः समूहोऽपि गुणः ताः स्त्रियः पशूनां प्रियाः। न तु मनुष्याणां स्युरिति शेषः। अतः ये एवंविधासु स्त्रीषु गुणदृष्टिं कुर्वन्ति ते पशव इत्यर्थः। शार्दूल० ॥

क्वचिद्वीणावादः क्वचिदपि च हाहेति रुदितं
क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः।
क्वचिद्रामा रम्या क्वचिदपि गलत्कुष्ठवपुषो
न जाने संसारः किममृतमयः किं विषमयः ॥ २१ ॥

वीणावादः वीणवादनम्। विदुषां गोष्ठी शास्त्रप्रचुरा कथा। सुरया मत्तानां कलहः। गलत् प्रस्रवत् कुष्ठं यस्य तादृक् वपुः येषां ते यासां ता वा तथा। संसारः अमृतमयः सुखप्रचुरः विषमयः दुःखप्रचुरो वा न जाने। प्राचुर्ये मयट्। परस्परविरुद्धावस्थावलोकनान्निश्चयाभाव इत्यर्थः। शिखरिणी ॥

गात्रैर्गिरा च विकलश्चटुमीश्वराणां
कुर्वन्नयं प्रहसनस्य नटः कृतोसि।
तं त्वां पुनः पलितकर्णकभाजमेनं
नाट्येन केन नटयिष्यति दीर्घमायुः ॥ २२ ॥

गात्रैः गिरा च विकलः। चटुं चाटुभाषितम्। प्रहसनस्य हास्यरसप्रधान-

१ प्रवचने. २ प्रयोगाभ्यै ३ हि नराणां ४ चाप

नाटकविशेषस्य । पलितयुतौ कर्णौ तौ एव कर्णकौ भजतीति तं भाजं । नाट्येन अवस्थानुकृत्या । दीर्घं प्रविततम । वसन्ततिलका ॥

चला लक्ष्मीश्चलाः प्राणाश्चलं जीवितयौवनम् ।
चलाचले च संसारे धर्म एको हि निश्चलः ॥ २३ ॥

चला चञ्चला लक्ष्मीः संपत् कान्तिर्वा । जीवितं च यौवनं च जीवितयौवनम् । चलाचले चञ्चले । धर्म एव एको निश्चलो नित्यः ॥

जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं
श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम् ।
संजातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न चाधो
ब्रह्माण्डोदुम्बरान्तर्मशकवदपरे जन्तवो जातनष्टाः ॥२४॥

येन कूर्मेण पृथु यद्भुवनं तस्य भराय भारधारणार्थं पृष्ठं स्वपृष्ठं अर्पितं दत्तम् । ध्रुवस्य जन्म श्लाघ्यं स्तुत्यं यत्र यस्मिन्ध्रुवे नियमितं तेजस्विचक्रं देदीप्यमानतारामण्डलं भ्रमति । नोपरिष्टान्न चाप्यधः न कथमपि परहितस्य परोपकारस्य करणे । संजाताश्च ते विगतोऽर्थो येषां ते व्यर्थाश्च पक्षा येषां ते । पक्षे संजाताश्च ते व्यर्थौ पक्षौ स्वार्थपरमार्थलक्षणौ येषां ते तथा च । ब्रह्माण्डमेव उदुम्बरं तस्यान्तरे मध्ये ये मशकास्तद्वदपरे जन्तवः जातनष्टाः जाताः नष्टाश्च । 'जायस्व म्रियस्व इत्येतत्तृतीयं स्थानं' इति श्रुतेः । शार्दूलवि० ॥

ददतु ददतु गालीर्गालिमन्तो भवन्तो
वयमपि तदभावाद्गालिदानेऽसमर्थाः ।
जगति विदितमेतद्दीयते विद्यमानं
न हि शशकविषाणं कोऽपि कस्मै ददाति ॥ २५ ॥

गालिमन्तो गालयः सन्ति एषां ते भवन्तः । निन्दायां मतुप् । गालीः ददतु ददतु नाम । तदभावाद्गाल्यभावात् । वयमपि तासां दाने असमर्थाः । विद्यमानं वस्तु दीयते अन्यस्मै इत्येतज्जगति विदितं प्रसिद्धं हि । यस्मात् शशकविषाणं शशशृङ्गं न कोऽपि कस्मै ददाति । तस्यात्यन्ताभावात् । मालिनी ॥

न भिक्षा दुष्प्रापा पथि मम महारामरचिते
फले संपूर्णा भूर्विटपिमृगचर्मापि वसनम् ।
सुखैर्वा दुःखैर्वा सदृशपरिपाकः खलु तदा
त्रिनेत्रं कस्त्यक्त्वा धनलवमदान्धं प्रणमति ॥ २६ ॥

---

१ वनमथ स्थापितं येन पृष्ठे. २ करणे नोऽकरिष्यन्नधार्थम्. ३ ऽपमृगमुच०. ४ सुखे वा दुःखे वा.

महारामे उद्याने स्वानन्देन वा रचिते पथि भिक्षा न मम दुष्प्रापा । यतो भूः भूमिः फलैः संपूर्णा । विटपिचर्म वृक्षत्वक् मृगचर्म कृष्णाजिनमपि वसनं वस्त्रम् । यदा । खलु निश्चये । सुखं दुःखं वा सदसत्परिपाकः समर्पयेदिति तदा त्रिनेत्रं शंकरं त्यक्त्वा विहाय कः सुधीः धनलवेन मदः तेन अन्धस्तं जनं प्रणमति । न कोऽपीत्यर्थः । शिखरिणी ॥

नो खड्गप्रविदारिता करटिनो नोद्वेजिता वैरिण-
स्तन्वङ्ग्या विपुले नितम्बफलके न क्रीडितं लीलया ।
नो जुष्टं गिरिराजनिर्झरझणज्झांकारकारं पयः
कालोऽयं परपिण्डलोलुपतया काकैरिव प्रेरितः ॥ २७ ॥

खड्गेन करटिनः अरिहस्तिनः न प्रविदारिताः । वैरिणः नोद्वेजिताः । न उद्वेगं प्रापिताः । लीलया तन्वङ्ग्याः सुकुमाराङ्ग्याः विपुले विस्तीर्णे नितम्बफलके कटिपुरोभाग एव फलकं तस्मिन् न क्रीडितम् । गिरीणां राजा तस्मात् यः निर्झरः झरः तस्य झणज्झाकारं करोतीति तत्पयः नो जुष्टं न सेवितम् । परपिण्डे लोलुपता तया । शार्दूलवि० ॥

प्रशान्तशास्त्रार्थविचारचापलं
निवृत्तनानारसकाव्यकौतुकम् ।
निरस्तनिःशेषविकल्पविस्तरं
प्रपत्तुमन्विच्छति शंकरं मनः ॥ २८ ॥

प्रशान्तं शास्त्रार्थस्य विचारे चापलं यस्य तत् । निवृत्तं नानारसा यस्मिन् तादृशे काव्ये कौतुकं यस्य तत् । निरस्तं निःशेषं यथा स्यात्तथा विकल्पानां विस्तरं यस्य तत् । मनः शंकरं प्रपत्तुं प्रकर्षेण प्राप्तुमन्विच्छति नितरां इच्छति । वंशस्थम् ॥

भव्यं भुक्तं ततः किं कदशनमथवा वासरान्ते ततः किं
कौपीनं वा ततः किं किमथ सितमहाम्बरं वा ततः किम् ।
एका भार्या ततः किं शतगुणगुणिता कोटिरेका ततः किं
ह्येको भ्रान्तस्ततः किं करितुरगशतैर्वेष्टितो वा ततः किम् २९

१ निवद्ध २ वध ३ भग्नमत्तेभकुम्भे पर्वतकायम्  पाषाणान् विमाचितो येन पर्शी मौलौ न प्राप्तं यत्र नो मृष्टं कान्तिमत्तां स्तने च मालनं भग्नं तथा व्यापरं । शेषस्यापि धरां वहन्न न कृतो भारावतारः क्षणं धन. सत्पुरुषाभिमते मनोऽपि भिक्षा वृत्तिकलसै ॥ वनो देवनिर्देश. । शार्दूलविक्रीडितमिति शास्त्र । ६ नीचैः मनुष्यैर्ह्नि- नेति शेषः । भृशमातुरम् । ७ मुक्तं ८ कदशन-

भव्यं सुंदरं भक्त ओदनः । कदशनं कुत्सितमन्नम् । वासरान्ते दिनान्ते । सित म.वाम्बरं शुभ्रमहावस्त्रम् । शतगुणैर्गुणिता एका कोटिः अपरिमिता इति यावत् । कारणा तु भाणा च शतैः वेष्टितः । सर्वस्य नश्वरस्वभावत्वान्न किंचिदपि परमार्थसाधकमिति तात्पर्यम् । स्रग्धरा ॥

भिक्षा कामदुघा धेनुः कन्था शीतनिवारिणी ।
अचला तु शिवे भक्तिर्विभवैः किं प्रयोजनम् ॥ ३० ॥

भिक्षा कामान् दोग्धीति तथा धेनुः । शीतनिवारिणी शीतनिवारणशीला कन्था । अचला दृढा भक्तिस्तु शंकरे । एवं स्थितेऽपि चेत् विभवैः किं प्रयोजनम् न किंचिदपीत्यर्थः ॥

भूः पर्यङ्को निजभुजलता कन्दुकं खं वितानं
दीपश्चन्द्रो विरतिवनितालब्धसङ्गप्रमोदः ।
दिक्कान्ताभिः पवनचमरैर्वीज्यमानः समन्ता-
द्भिक्षुः शेते नृप इव भुवि त्यक्तसर्वस्पृहोऽपि ॥ ३१ ॥

निजभुजलता कन्दुकं । 'गिन्दी गालउशी' इति प्राकृते ख्यातम् । विरतिः वैराग्यमेव वनिता तस्या लब्धः सङ्गप्रमोदः येन । दिश एव कान्ताः ताभिः पवन एव चमराणि तैः । समन्तात् सर्वतः बीज्यमानः । त्यक्ता सर्वाः स्पृहा आशा येन सः । भिक्षुः संन्यासी नृप इव भुवि शेते । मन्दाक्रान्ता ॥

यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटुं मृषा
नैषां गर्वगिरः शृणोषि न पुनः प्रत्याशया धावसि ।
काले बालतृणानि खादसि सुखं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः ॥ ३२ ॥

हे कुरङ्ग यद्धनिनां वक्त्रं मुहुः वारंवारं नेक्षसे न पश्यसि । मृषा चाटुं मिथ्या स्तुतिभाषणं च न ब्रूषे । एषां पूर्वोक्तानां गर्वप्रचुरा गिरः भाषणानि च न शृणोषि । पुनः परं प्रत्याशया इष्टस्येच्छया तान्प्रति न धावसि । काले क्षुत्काले बालतृणानि खादसि निद्राप्राप्तौ च सुखं निद्रासि तत्तस्मान्मे मां ब्रूहि भवता कुत्र पुण्यस्थले किं नाम तपः तप्तम् । यतः त्वत्सदृशाचरितं बुद्धिमति पुरुषेऽपि न दृश्यते अतः कथ्यं तपस एषा पारणानि- न जाने इति भावः । शार्दूल० ॥

---

१ दिक्कन्याभि. २ भनुवलम् ३ असाभिर्न्यथा चिन्तयामि इति (नी. श. २) पद्यं.

समारम्भा भग्ना: कति न कतिवारांस्तव पशो
पिपासोस्तुच्छेऽस्मिन्द्रविणमृगतृष्णार्णवजले ।
तथापि प्रत्याशा विरमति न तेद्यापि शतधा
न दीर्णं यच्चेतो नियतमशनिग्रावघटितम् ॥ ३३ ॥

हे पुच्छविषाणरहित पशो अस्मिन् तुच्छ द्रविणमेव मृगतृष्णासमुद्र तस्य जले पिपासोस्तव कतिवारान् कति कियन्त समारम्भा कर्मप्रारम्भा न भग्ना । अपि तु अनेकश अनेकप्रारम्भा भग्ना इत्यर्थः । तथापि प्रत्याशा तव उत्कटतृष्णा नाद्यापि विरमति शाम्यति । एवमपि यत चेत न शतधा दीर्णं अनेकधा विदीर्णमतः तन्नियतं निश्चयेन अशनिरेव ग्रावा तेन घटित कृतम् । अतो नमस्तुभ्यमेवंविधनिर्लज्जमनुष्याय । शिखरिणी ॥

संमोहयन्ति मदयन्ति विडम्बयन्ति ।
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ।
एता: प्रविश्य सदयं हृदयं नराणां
किं नाम वामनयना न समाचरन्ति ॥ ३४ ॥

*संमोहयन्ति विवेकरहित कुर्वन्ति मदयन्ति उन्मादयन्ति विडम्बयन्ति उप-*हास्यतां नयन्ति । नितरां भर्त्सयन्ति । विषादयन्ति विषादं प्रापयन्ति । एवं एता वामनयना स्त्रिय नराणां पुरुषाणा सदयं हृदयं प्रविश्य किं नाम न समाचरन्ति सर्वमपि समाचरन्तीत्यर्थः । वसन्ततिलका ॥

सिंहो बली द्विरदशूकरमांसभोजी
संवत्सरेण रतिमेति किलैकवारम् ।
पारावत खरशिलाकणमात्रभोजी
कामी भवत्यनुदिनं वद कोऽत्र हेतु ॥ ३५ ॥

द्विरदः करी शूकरो वराह तयो मांसभोजनशीलो बली सिंहः किल संवत्सरेण एकवारमेव रतिमेति । रतिसुखाभिलाषी भवतीत्यर्थः । कामी खराः कठिना ये शिलाकणा तन्मात्रभोजी पारावत कपोतोऽनुदिन प्रत्यहं भवति । कोऽत्र हेतु कारणं वद कथय । क्षुद्रत्वमहत्त्वे एव अत्र कारणमित्यर्थः । वसन्ततिलका ॥

स्थितिः पुण्येऽरण्ये सह परिचयो हन्त हरिणैः
फलैर्मेध्या वृत्तिः प्रतिनदि च तल्पानि दृषदः ।

इतीयं सामग्री भवति हरभक्तिं स्पृहयतां
वनं वा गेहं वा सदृशमुपशान्त्यैकमनसाम् ॥ ३६ ॥

पुण्यं च तदरण्यं तस्मिन् स्थिति. वसति । हर्म्यमिति हर्म्यं । हरिणैः सह परिचयो मैत्री । फलं मेध्या पवित्रा वृत्तिः जीविका । प्रतिनदि च दृषदः शिला एव तलानि शयनानि । इतीयं एवंविधा हरिभक्तिं स्पृहयतां काङ्क्षतां सामग्री साहित्यं भवति यत. उपशान्तवैकरस्यो मन येषां तेषां वनं वा गेहं वा सदृशं भवति । तेषां गृहे कश्चिदाभिनिवेशो न वा वने तिरस्कारो वर्तते सर्वसाम्यावस्थापन्नत्वादित्यर्थः । शिखरिणी ॥

स्वादिष्ठं मधुनो घृताच्च रसवद्यत्प्रस्रवत्यक्षरं
दैवी वागमृतात्मनो रसवतस्तेनैव तृप्ता वयम् ।
कुक्षौ यावदिमे भवन्ति भृतये भिक्षाहृताः सक्तव-
स्तावद्दास्यकृतार्जनैर्न हि धनैर्वृत्तिं समीहामहे ॥ ३७ ॥

दैवी वाक् आत्ममाता यत् अमृतात्मनः अमृतरूपात् रसवतश्च आत्मनः मधुनः स्वादिष्ठं घृताच्च रसवत् अक्षरं प्रस्रवति तेनैव वयं तृप्ताः । परं च यावत् भृतये शरीरधृत्यर्थमिमे भिक्षया आहृताः सक्तवः कुक्षौ भवन्ति तावत् दास्यकृतार्जनैर्धनैः न हि नैव वृत्तिं जीविकां समीहामहे इच्छामः । शार्दूलवि० ॥

---

शृङ्गारशतकवर्तीनि पद्यान्यत्रोपलभ्यमानानि

कृशः काणः खञ्ज श्रवणरहितः पुच्छविकलो
व्रणी पूतिक्लिन्नः कृमिकुलशतैरावृततनुः ।
क्षुधाक्षामो जीर्णः पिठरककपालार्पितगलः
शुनीमन्वेति श्वा हतमपि च हन्त्येव मदनः ॥ ३८ ॥

कृशः अस्थिपञ्जरावशेषः । काण एकचक्षुः । खञ्जो विकलपादः । पुच्छरहित. । व्रणी सव्रणः । पूया क्लिन्नः । कृमिकुलशतैरावृता तनुर्यस्य । क्षुत्पीडितः । अत एव जीर्ण. क्षीणशक्तिः । पिठरकस्य कपाले अर्पित. गलः येन । एवंभूतः श्वा शुनीमन्वेति विषयाभिलाषेणानुगच्छति । मदनः हतप्रायमपि हन्त्येव । अहो कष्टम् । शिखरिणी ॥

विरमत बुधा योषित्सङ्गात्सुखात्क्षणभङ्गुरा-
त्कुरुत करुणामैत्रीप्रज्ञावधूजनसंगमम् ।

---

१ शान्तैक २ वा ३ दैवी. ४ दनी. ५ वसुमि.. ६ भोगान्. ७ पूय. ८ पिठरज, कपालेपि०ञ्चदित.

न खलु नरके हाराक्रान्तं घनस्तनमण्डलं
शरणमथवा श्रोणीबिम्बं रणन्मणिमेखलम् ॥ ३९ ॥

क्षणभङ्गुरात्संसारात्स्वामिनः योगिनःभगात् ध्यानसमागमायमु... तस्मात् । विरमत त्यजतेत्यर्थः । करुणा च मैत्री च प्रज्ञा च करुणामैत्रीप्रज्ञा ता एव वधूजन स्त्रीसमुदायः तस्य संगमं कुरुत । हारेण आक्रान्तं घनं निरंतरं घन निरन्तरं सान्द्रं इत्यमरः । स्तनयोः मण्डलम् । शरणं रक्षितृ । श्रोणी-बिम्बं मंडलम् । रणन्तो मणीनां मेखला रशना यत्र तत् । उक्तलक्षणम् सर्वविषय-सुखमपि न क्षाति । विषयाः पुनः नरके पातयन्ति करुणाप्रभृतयः सात्विक-भावास्तु स नरकादुद्धरन्तीति भावः । हरिणी वृत्तम् ॥

बाले लीलामुकुलितममी मन्थरा दृष्टिपाताः
किं क्षिप्यन्ते विरम विरम व्यर्थ एष श्रमस्ते ।
संप्रत्यन्ये वयमुपरतं बाल्यमास्था वनान्ते
क्षीणो मोहस्तृणमिव जगज्जालमालोकयामः ॥ ४० ॥

हे बाले लीलया मुकुलितं कुड्मलितं यथा स्यात्तथा । मन्थरा शनैर्गामिनः कुटिलाश्च दृष्टेः पाताः कटाक्षाः किं केन हेतुना त्वया क्षिप्यन्ते अस्यन्ते । विरम्य । तव श्रमणालम् । तत्र हेतुमाह संप्रतीति । इदानीं वयं अन्ये जाताः न पूर्ववत् ग्राम्यधर्मासक्ताः । अस्माकं बाल्यं मौग्ध्यम् । उपरतं शान्तम् । गतमिति यावत् । आस्था प्रीतिर्वनान्ते वनमध्ये । अविद्याजन्यो मोहः क्षीणः ... । इदं सर्वं जगज्जालं तृणमिव तुच्छवत् पश्यामः । मन्दाक्रान्ता ॥

इयं बाला मां प्रत्यनवरतमिन्दीवरदल-
प्रभाचोरं चक्षुः क्षिपति किमभिप्रेतमनया ।
गतो मोहोऽस्माकं स्मरकुसुमबाणव्यतिकर-
ज्वरज्वाला शान्ता तदपि न वराकी विरमति ॥ ४१ ॥

इयं बाला कुमारी मां प्रति मामुद्दिश्य । अनवरतं अभीक्ष्णं प्रसक्तमिति यावत् । इन्दीवरदलस्य नीलकमलपत्रस्य प्रभा कान्तिं तां चोरयतीति चोरं चक्षुः क्षिपति । किं अनया बालया अभिप्रेतं इष्टम् । तथा च स्मरस्य कुसुमान्येव बाणाः तेषां व्यतिकरेण सम्बन्धेन यो ज्वरः दाहः तस्य ज्वाला शा-न्ता । तदप्येवमपि वराकी अनुकम्पार्हा न विरमति । कटाक्षविक्षेपान्न निव-र्तते । शिखरिणी ॥

---

१ माग. २ छर.

रे[1] कन्दर्प करं कदर्थयसि किं कोदण्डटङ्कारितै
रे रे कोकिल कोमलैः कलरवैः किं त्वं वृथा जल्पसि ।
मुग्धे स्निग्धविदग्धमुग्धमधुरैर्लोलैः कटाक्षैरलं
चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते ॥ ४२ ॥

रे कन्दर्प पञ्चशर कोदण्डस्य धनुष टङ्कारितैः टणत्कारैः किं वृथा निरर्थकं करं कदर्थयसि पीडयसि । रे रे कोकिल । आदरार्थो वीप्सा । त्वं कोमलैः कलरवैः रव्यक्तमधुरैः शब्दैः वृथा निष्फलं किं जल्पसि । हे मुग्धे बाले स्निग्धाश्च विदग्धाश्च मुग्धा मधुराश्च तैः तथोक्तैः लोलैः चपलैः कटाक्षैः अलं कृतं प्रयत्नेनेत्यर्थः । यतः अस्माकं चेतः चन्द्रः चूडायां यस्य स चन्द्रचूडः शिवः । चुम्बितं चन्द्रचूडस्य चरणयोः ध्यानमेवामृतं येन तत्तथामृतं वर्तते । सर्वसङ्गरहिता वयमिदानीं जाता स्म इति भावः । शार्दूलवि० ॥

उन्मीलत्त्रिवलीतरंगवलया प्रोत्तुंगपीनस्तन-
द्वंद्वेनोद्यतचक्रवाकमिथुना वक्त्राम्बुजोद्भासिनी ।
कान्ताकारधरा नदीयमभितः क्रूराशया नेष्यते
संसारार्णवमज्जनं यदि ततो दूरेण संत्यज्यताम् ॥ ४३ ॥

उन्मीलन्ती या त्रिवली वलित्रयं सैव तरङ्गवलयं यस्याः सा तथा । प्रकर्षेण तुङ्गं पीनं च स्तनद्वन्द्वं तेन उद्यतं चक्रवाकमिथुनं यस्याः सा । वक्त्रमेवाम्बुजं तेन उद्भासिनी प्रकाशमाना । कान्तायाः आकार आकृतिः तस्य धरा । अभितः सर्वतः क्रूरा आशया मकरादयः यस्याः । पक्षे क्रूरः निष्ठुर आशयो भावो यस्याः । सेयं नदी यदि संसारार्णवे मज्जनं नेष्यते ततः तर्हि दूरतः संत्यज्यताम् । अन्यथा संसारार्णवमज्जनमपरिहार्यमेवेति तात्पर्यम् । शार्दूल० ॥

इह हि मधुरगीतं नृत्यमेतद्रसोऽयं
स्फुरति परिमलोऽयं स्पर्श एष स्तनानाम् ।
इति हतपरमार्थैरिन्द्रियैर्भ्राम्यमाणः
स्वहितकरणधूर्तैः पञ्चभिर्वञ्चितोऽस्मि ॥ ४४ ॥

इहेत्यनेन पञ्चेन्द्रियाणां विषया उक्ताः । हतः परमार्थः यैः तैः इन्द्रियैः भ्राम्यमाणः स्वहितकरणे धूर्तानि कुशलानि तैः पञ्चभिः ज्ञानेन्द्रियैः वञ्चितोऽस्मि अतस्तेषां दमनमेव सर्वार्थसाधकेन कर्तव्यमिति तात्पर्यम् । मालिनी ॥

---

१ किं कन्द०. २ शं. ३ कोमलं कल्रवं ४ वल्गसि. ५ मधुराक्षैः. ६ नित्या.

# INTRODUCTION.

## *THE POEM AND THE AUTHOR*

The little volume now offered to the public contains two of the three *S'atakas* of Bhartrhari, one of the celebrated poets of ancient India. Of the history of the poem or of its author very little is known that is authentic. The only circumstances in the life of Bhartrhari that we know have been handed down by traditions and the various accounts that these give can hardly be reconciled. Bhartrhari is traditionally represented as belonging to the royal house of Ujjain, and though he was entitled to the crown, he is said to have abdicated it in favour of his younger brother Vikrama, the founder of the Samvat Era, as he was disgusted with worldly life on account of the discovery of his wife's infidelity[1] and retired to the forest wishing to lead an ascetic's life. Be that as it may. One fact, appears to be incontrovertibly true from the general tenor of the S'atakas that Bhartrhari must have met with sore disappointment in life, and his faith in the virtue of woman was perhaps shaken by certain bitter experiences in his own life or of those he had around. We give below the different accounts of him as found in different works. (1) In one Ms the name of Bhartrhari's wife, mentioned in connection with the above tradition, is given as Anangasena. (2) The *[illegible]* mentions Virasena, a Gandharva, as the father of Bhartrhari. *Four children were born, viz Bhir*, Vikramaditya, Subhatavirya and Mainavati (the mother of the well known Gopichanda). (3) Bhartrhari's mother was Sus'ila, the only daughter of the king of Jambudvipa. This king had no son and so he gave the

1 This tradition seems to have given rise to *Niti S'ataka* sl. 2 which has hardly any connection in the place where it stands, and may possibly be an interpolation. The use of the first personal pronoun in the verse is not an indubitable proof of its reference to the author himself and the want of true critical spirit on the part of the Pandits might have led to the fabrication of the story current among the people.

kingdom to Bhartrihari who transferred the seat of government to Ujjain, placed Vikramáditya on the throne and appointed Subhatavirya his commander-in-chief. (4) The name of Bh's wife was Padmák'shi and she was the daughter of Simhasena, king of Magadha (5) Mr Sheshagiri Shástri gives a rather curious tradition. He says.—"King Vikramáditya is said to have been the son of a Bráhmana named Chandragupta who married four wives, one of the Bráhmana caste, another of the Kshatriya, the third of the Vais'ya, the fourth of the S'udra caste. They were called Bráhmaní, Bhánumatí, Bhágyavatí and Sindhumatí Each of the four bore him a son. Vararuchi was born of the first wife, Vikramárka of the second, Bhatti of the third, and Bhartrhari of the fourth Vikramárka became king, and Bhatti served him in the capacity of Prime-Minister"

It need not be said how far such traditions are capable of furnishing us materials for a trustworthy account of the poet. All that can be gathered from the above mentioned traditions is that our poet was of royal descent and that, being disgusted *with the world*, he *renounced it, and retired to a forest* as an anchorite and futher that he was a man of poetic talents, a great scholar and a Yogi. Besides the *S'atakas* another work called the *Vákyapadíya* goes by the name of Bhartrhari. The poet Bhatti, author of the *Bhatti Kávya*, is also by tradition identified with Bhartrhari [1].

## THE AUTHORSHIP OF THE SATAKAS.

Bhartrhari is, by a general consensus of opinion, regarded as the author of the three S'atakas. To a superficial reader they appear to be a collection of verses without any connecting link. And this circumstance, *viz*, that the verses have no common bond of unity, has given rise to a theory that the *S'atakas* are not an original work but a mere compilation from the works of former authors. An additional circumstance, that some of the verses

1 The controversy as to the identity of Bhartrhari and Bhatti is discussed further on

in these *S'atakas* are found in works by other authors which are not mere compilations, has lent colouring to this assumption. Another theory is that the author of the *S'atakas* was not Bhartṛhari but that some poet composed them in his name. This theory has neither a wide currency nor has it any strong hold on the minds of scholars. With regard to the former it is sufficient to remember that only a small number of the verses in the *S'atakas* have been attributed to other writers, that these in almost all cases are persons of less note and that they cannot be said to have preceded Bhartṛhari in chronological order The number of verses which can at all be challenged as not being Bhartṛhari's will not exceed fifty in the two *S'atakas*, and even of this number very few can be definitely ascribed to one writer or another With the exception of Kálidása with whom Bhartṛhari has one verse in common (sl 70 *Nīti S'ataka*) all others from whom Bhartṛhari can be suspected of having borrowed are persons less noted than he, and removed by several centuries from the period at which we think our poet can be placed The S'atakas, therefore, must be regarded as an original work Had they been a mere compilation Bh would have designated his collection by some such name as Subhāshita manjarī or the like. Besides the verses are not altogether isolated. There are connecting links which divide them into different groups. To a careful reader they will appear to be the outpourings of a mind strongly disgusted with the world or powerfully affected by its incidents, and the poet must have penned his thouhts [illegible] his mind was held in sway by different emotions at of the work and its very want of [illegible] that the nature continuous narrative afforded facilities to unscrupulous persons to pass off either their own or other verses as Bhartṛhari's, and that numerous interpolations must have, from time to time, been made, since the number of verses in each *S'ataka* has considerably increased, so much

that the three *Satakas* now contain nearly 400 verses[1] between them. The growth, however, has been so much mixed with the original that it has now become an almost hopeless task to resort to the process of elimination.[2]

## THE DATE OF THE S'ATAKAS.

The poet himself furnishes no evidence as to his date, nor does he give any information about himself in his work. We must therefore judge at what period in Sanskrt literature we are to place the poet, first, from tradition, and secondly from internal and external evidence. Tradition makes Bhartrhari, as has already beed said, the brother of Vikramâditya, the epoch maker. And antiquarians do not seem to be opposed to this view. Vikrama's era, the Samvat, begins 56 years before Christ.[3] Bhartrhari being the elder brother of Vikrama, we

1 It can not be said whether it was with regard to this circumstance that Colebrooke spoke of the *S'atakas* as 'either three or four *Satakas* or centuries of couplets.'

2 An attempt (though not final) has been made in this edition to detach such verses from the original.

3 There is some difference of opinion among antiquarians as regards the beginning of the Samvat Era. Mr. Telang believes that Vikrama was the founder of the Shaka or Salivâhana era which dates with 78 A. D., and thus he places Bhartrhari towards the close of the first and the beginning of the second century after Christ. Mr. Telang's main contention is that Bhartrihari being the author of *Vakyapadiya*, sufficient time must be allowed to elapse between him and Patanjali 'for all the vicissitudes' in the life of the latter's *Maha'bha'shya*. We shall show further on, from evidence collected by Mr. K. B. Pâthak, and which seems to be [illegible], the author author of the [illegible] Buddhist, and therefore Mr. Telang's objection to accepting B. C. 56 as the date of the commencement of the Samvat Era, on the ground of insufficiency of the period we get for certain incidents in the history of the *Maha'bha'shya* recorded by the author of the *Vakyapadiya*, falls to the ground.

Another date has been proposed to mark the commencement of the Samvat Era *viz.* A. D. 544. The reasoning by which the

might suppose that tradition places him in the first half of the century before Christ [1]

The internal evidence as to the date of the *S'atakas* is of a very vague and uncertain nature. The *S'atakas* are interspersed with Vedántic phraseology, but this in itself is hardly sufficient to determine their period. The doctrines of the Vedántins were being discussed and formed for a number of centuries, and it is therefore difficult to hazard a conjecture as to a particular period in the history of Sanskrit letters having produced the poems The Puranas are also referred to in the work; and as Prof. Wilson has tried to show that none of the Puránas date back more than a thousand years, some scholars have tried to place the *S'atakas* at so late a period as the eleventh or twelfth[2] century A. D. It is to be greatly

result has been arrived at, is, to speak most charitably of it, simply fanciful (For further information, see Intro to Abhi sak ). B C 56-57 may, therefore, be taken as the date of the commencement of the Samvat or Vikrama era

1 It is difficult to determine the exact period in the history of Sanskrit literature which might appropriately be called the Vedántic age This followed the Upanishad period and the still more famous S'ankaráchárya. Kumárila is supposed to have flourished about 700 A D., and S'ankaráchárya half a century later ( though there are grounds to believe that he flourished long before this) The Vedántic age thus extended beyond the eighth century but its beginning cannot be traced with any degree of accuracy

2 The Pauranic age is also the subject of as much controversy as any other period in Sanskrit literature The greatest name connected with this period is that of Vya'sa, the author of the eighteen *Puranas* Vya'sa's name is also connected with the Vedic period, for he is said to have arranged the Vedas as we now find them. Vya'sa may therefore be regarded as the link between the Vedic and the Paura'nic periods, and to have lived towards the close of the Vedic age and marked the commencement of the Pauranic age He is therefore certainly a good deal older than the Christian Era

doubted whether the reasoning of Prof. Wilson is conclusive enough; and whatever view might be held as to the interpolations which have been made in some of the Pura'nas, yet in general it may be said that they or some of them at least have existed prior to the first century A. D., so that the mere mention of the Puranas in a work cannot prove any thing as to its being a modern production.

Let us now see if *external evidence* will assist us in establishing the date of Bhartrhari. His commentators, it seems, never troubled themselves with this question. They like others before and after them appear to have followed the maxim, "gold is gold, why inquire how old it is?" Nor is there any specific mention of the author of the *S'atakas* in any of the old writers which will throw any the least light on his age.

There is, however, one passage in a Persian work, the *Kalila-u-Dimnah* which bears a close resemblance to one occurring in the *Pancha Tantra*, where again it is borrowed from Bhartrhari. The Persian work was a translation of the *Pancha Tantra* not directly from the original Sanskrit and was A. D. The *Pantna* [illegible] between 531 and 579 in existence in the year 50) A. D. at the latest. The *Pancha Tantra* is not in all its parts an original work, but draws largely upon the literature then existing. Among other works it is indebted to the *S'atakas*, and one stanza from the *Niti Sataka* has been borrowed by the *Pancha Tantra*[1] and from thence by the *Kalila-u Dimnah*. The author of the *Satakas* therefore must have lived some time before 500 A. D., that is we cannot place him later than the latter half of the fifth century.

Bhartrhari nowhere mentions contemporary persons or incidents nor is he referred to by any writer as a contem-

1 *Niti Sataka*, Sl. 94. Sharngadhara, however, quotes this verse as of some other poet after quoting a number from Bhartrhari

porary. Thus it will be seen that there is nothing that goes against the date furnished by the tradition.

## THE IDENTITY[1] OF BHARTRHARI AND BHATTI.

Bhartṛhari has been indentified with Bhaṭṭi, the author of the celebrated *Bhatti Kārya* As regards Bhartrhari himself there is a controversy as to whether the Bhartrhari of the *Satakas* and his namesake, author of the *Vākyapadīya*, are one and the same. So the controversy expands itself thus—Was Bhaṭṭi another name for the author of the *Satakas*, or for the author of the *Vākyapadiya*, or were the three one and the same or quite different individuals? That the three were not one is conclusively proved from some evidence collected together by Prof K B. Pāthak Mr Pāthak has proved from contemorary and other unquestionable evidence that the author of the *Vākyapadiya* was a Buddhist. Neither Bhartṛhari, the author of the *Satakas*, nor Bhaṭṭi, was a Buddhist. The *Satakas* are not only not imbued with any of the characteristics that ought to mark a Buddhistic work for the inculcation of moral principles (for which the *Satakas* are intended), but even the alleged traces of Buddhism in them are so faint that one can confidently assert that the [illegible] is not the production of Buddhistic genius Nor was [illegible] *kārya*, a hero whom [illegible] in his epic, the *Bhaṭṭi* have chosen for his hero a co-religionist rather than [illegible] divinity. So the author of the *Vākyapadiya* was a distinct individual from either of the authors of the *Satakas* or the *Bhaṭṭikarya*. So the question to be determinded now is—was Bhaṭṭi the same as the author of the *Satakas*? And we think not In the accounts of the lives of these two individuals there is too great difference to admit of the one being identified with the other. If we ignore the tradition that the two were one

1 This is taken here with minor changes, which do not affect the argument at all, from my Introduction to the *Bhatti Kārya* Cantos I–V

